|| श्रीः ||

# || अर्जुनः ||

# ARJUNAḤ

(*A Prose work in Sanskrit*)

*By*

VIDYABHASKARA, VIDVAN

M. RAMAKRISHNA BHAT, M. A.,

(*Professor of Sanskrit & Supt. of Indian Languages,*

*St. Joseph's College, Bangalore.*)

1953

[Price Re. 1-4-0

॥ श्रीः ॥

# ॥ अर्जुनः ॥



(गद्यग्रन्थः)


रचयिता :—

विद्याभास्करः, विद्वान् .

एम्. रामकृष्णभट्टः एम्. ए.

वेङ्गलूरस्थ सैण्ट् जोसेफ् कलाशालायां संस्कृताचार्यः,

भारतीयभाषाप्रत्यवेक्षकश्च ।



१९५३




मूल्यम्— सपादं रूप्यकम् ।

## ॥ विषयानुक्रमणिका ॥







|| श्रीः ||

# || प्रस्तावना ||



भगवत्याः श्रीमज्जगज्जनन्याः करुणया गद्यग्रन्थोऽयमर्जुनाभिधोऽधुना सहृदयलोकस्योपहारीक्रियमाणो जनयति ममामन्दमानन्दम्। यतः कस्य नाम न जायेत निजयत्नस्य फलेग्रहित्वं प्रत्यक्षीकुर्वाणस्य मानसं प्रमोदमेदुरम्। क्रियते चास्य प्रकाशनं स्मारं स्मारं गुरुवर्याणां चरणनलिनयुगलं सुगृहीतनामधेयानां सर्वशास्त्रपारावारपारदृश्वनां देवभूयं प्रपन्नानां श्रीमतां कुप्पुस्वामिशास्त्रिमिश्राणां सहजकरुणानाम्। सन्ति ग्रन्थेऽस्मिंश्चत्वारः प्रबन्धाः समावेशिताः। तेषु प्रथमस्तु "महाभारते अर्जुनः" इत्याख्यया श्रीमद्गुरुवर्यप्रशंसाभाजनीभूतो मद्रपुरराजकीयमहाकलाशालापारितोषिकसम्पोषितस्तदनुरोधेन "उद्यानपत्रिका"यां च क्रमशः प्रसिद्धिमनायि बहोः कालात्पूर्वम्। इतरे त्रयश्च "अमृतवाणी"पत्रिकायां प्रकाशिताः। इदानीमेतेषामीषदित्र तत्र तत्र संस्कारमारचय्य प्रकाशनमकारि। अनेन मदीयगद्यग्रन्थरचनोद्यमेन सहृदयवर्याः साधु सन्तुष्यन्ति प्रोत्साहयिष्यन्ति चैनमिति बाढं विश्वसिमि; यतो हि भवन्ति 'गुणगृह्या वचने विपश्चितः'। अयं ग्रन्थोऽपि विश्वविद्यालयकक्ष्यासु पिपठिषूणामध्येतॄणां च साहाय्यकमनल्पं कल्पयतीति दृढमाकलय्य हृदये तत्प्रकाशनप्रयत्नमात्मा कथमप्युपलम्भितः। अतः संस्कृतसेवाधुरन्धरा भारतीयविश्वविद्यालया-

धिकारिणः संस्कृतिप्रणयिनोऽन्ये सहृदयाश्च ग्रन्थमिमं यथावदादरेण प्रोत्साहदानेन चानुगृह्णन्त्विति चाभ्यर्थये ।

मुद्रणवेलायां प्रमादवशात्सञ्जातानि परिहृत्य स्खालित्यानि संख्यावन्तः सौहार्दकरम्बितहृदो ग्रन्थमिमं मधुरीकुर्वन्तु । अस्मिन्नवसरे पुनरपि श्रीमद्गुरुचरणानामनुग्रहः उत्थानपत्रिकासम्पादकमहाभागानां महोपकारश्च विशेषोदाहरणमर्हतः ।

अस्य प्रकाशने वित्तसाहाय्यकं विधाय विशेषोपकृतिमाततवतां संस्कृतसेवानिरतानां ज्ञानवयोवृद्धानां निरतिशयं स्मरामि सौजन्यं कृतज्ञतापूर्वकं श्रीमतां वि. शामण्णमहानुभावानाम् आयव्ययप्रत्यवेक्षकाणाम् ।

श्रीराममुद्रणालयाधिकारिणश्चाभिनन्दाम्येतत्पुस्तकसम्मुद्रणहेतोः ।

**गीर्वाणवाणीरसपानलुब्धाः श्रीभारताम्बाभ्युदयप्रसक्ताः ।**
**उदात्तचित्ताः सुधियोऽमुना मे ग्रन्थेन यायान्तु मुदं समग्राम् ॥**

॥ ॐ तत्सत् ॥

55 Wilson Gardens,
BANGALORE - 2
Dated 15th. Aug 1953

इति
सद्विद्वज्जनवशंवदः
**एम्. रामकृष्णभट्टः**

॥ ॐ ॥

# ॥ अर्जुनः ॥

## प्रस्तावना

"शत्रुर्विनश्यति धनञ्जयकीर्तनेन ॥

साक्षादिन्द्रः स्वयं जातः प्रसादाच्च शतक्रतोः ।
फल्गुनो जयतां श्रेष्ठः पूरुवंशविवर्धनः ॥
अजेयो युधि जेतारीन् देवतादीन्न संशयः ।
यस्य कीर्तिर्महेष्वासान् सर्वान् नोऽभिभविष्यति ॥
बुद्ध्या भुजबलोद्योगस्तेषु सर्वेषु पाण्डवः ।
अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः ॥
एषोऽस्त्रविदुषां श्रेष्ठ एष धर्मविदां वरः ।
एष शीलवतां चापि गुणरत्नाकरोऽर्जुनः ॥
अतित्यागी च योगी च क्षिप्रहस्तो दृढायुधः ।
प्रपत्तिमान् लब्धलक्षो रथयानविशारदः ॥
दूरपाती त्वसंभ्रान्तो महावीर्यो महास्त्रवित् ।
अदीनात्मा नरव्याघ्रः श्रेष्ठः सर्वधनुष्मताम् ॥"

उपर्युद्धृतश्लोकेभ्योऽर्जुनस्य विशिष्टा ये ये गुणाः श्रीमन्महाभारते प्रतिपादितास्ते सर्वेऽपि शक्यन्तेऽवगन्तुं सिंहावलोकनेन। सुविदितमेव सर्वेषामपि विदुषां ग्रन्थोऽयं प्राधान्येन वैशिष्ट्यं कर्मणः, परोत्कृष्टतां धर्मस्य च प्रतिपादयतीति। वयमिदानीं यतामहे प्रदर्शयितुं धनञ्जयः कौन्तेयेषु सर्वमहान् कर्मपरायणः कृतधीर्धर्मात्मा चासीदिति। वृत्तमस्यासीदाजन्ममरणमनुकरणीयं सर्वस्यापि लोकस्य। प्रामाद्यन्न कदापि स स्वधर्माद्गृहे वा पुरन्दरभवनभोगे, वने वा पितृवनघोरे। स्थिरबुद्धिरयं सुमहत्स्वपि वैशसेषु प्रसन्नशान्तहृदयः कर्तव्यमनुपालयंस्ते प्रादर्शयल्लोकाय या शक्तिरमोघा यच्च दैवं तेजो मानुषप्रकृतौ विवेते। नाभूत् स कदापि दुर्योधनादिवन्मत्सरी क्रूरकर्मा उतावलिप्तः। तस्यासन् धर्माः विनाशनं दुष्टानां परिपालनं शिष्टानामभिवर्धनं धर्मस्य समूलोत्पाटनमधर्मस्य चेति। न किमपि निमित्तमासीत् येन स पक्षपाती निजगाद च धर्म्यं स्वसिद्धाशयं धैर्येण सर्वदा जनविशेषनिस्पृहः। अधर्मं स स्वबन्धुष्वपि नामर्षयत्। आचकर्ष च दृष्टिं लोकानां मूर्तिमान् नवोऽवतार इव क्षत्त्रधर्मस्य।

अवाधीरयत स रूपेण दर्पं कन्दर्पस्यापि। श्यामलोऽपि मुखेन हिमांशुसन्निभेन जनयति स्म सन्दोहममन्दानन्दस्य लोकानाम्। भुजौ बभतुस्तस्याजानुलम्बिनौ वज्रादपि कठोरौ गाण्डीवमण्डितौ शासनायावतीर्णाविव भुवं हरिहरौ। अंसलस्तारुण्यपयःपूरितपृथुगात्रपारावारमहोत्साहलीलातरङ्गमालोऽसौ नामन्यतासाध्यं जगति किमपि। रराजे च रणाङ्गणे साक्षाच्छक्र इव धारयन् किरीटमनर्घमणिमण्डितं कव-

चमसुनिर्भेदं शस्त्रनिवहं चाद्भुतशक्तियुक्तं साध्वसकारणं दिवौकसामपि।

दर्शनीयशरीराकृतिमेनमवाप कुन्ती देवराज्ञाद् भर्तुराज्ञया मुनेर्विद्यया। देवराट् तु कुन्तीमुवाच स्वपुत्रः सर्वोत्कृष्टो जिष्णुर्मेधावी महाबाहुर्महारथश्च भूयादिति। तथा हि—

'पुत्रं तव प्रदास्यामि त्रिषु लोकेषु दुर्लभम्।
मित्रेभ्यो ब्राह्मणेभ्यश्च सुहृद्भ्यश्चार्थसाधकम्॥
सुतं तेऽग्र्यं प्रदास्यामि सर्वामित्रविनाशनम्।'

जाते च धनञ्जये समागत्य देवा ऋषयश्च नृपतिं पाण्डुमानन्दविकसितनेत्रारविन्दा जगद्धुर्धुरन्धरत्वं माहात्म्यं भवितव्यतां च तत्पुत्ररत्नस्य। तथा हि—

'साक्षादिन्द्रः स्वयं जातः प्रसादाच्च शतक्रतोः।
फल्गुनो जयतां श्रेष्ठः पूरुवंशविवर्धनः॥
पितृत्वाद्देवतानां हि नास्ति पुण्यतरस्त्वया।
धन्यस्त्वमचिरादेव स्वर्गं प्राप्स्यसि पुण्यभाक्॥'

राजा तु जन्मनाऽस्यैव कृतार्थममन्यतात्मानम्। जाताभ्यामपि युधिष्ठिरभीमसेनाभ्यां न प्रापत् सोऽभीष्टार्थं मनसस्तुष्टिं च। यादृशो भवेन्मानुषानमानुषांश्च समर्थो हन्तुं, दुराधर्षो रणे, नीतिमांश्च स्वकर्मणि तादृशं स चकमे पुत्रम्। निस्सन्देहमेवैत्र प्रदर्शयति चिन्ता राज्ञो धनञ्जयः तत्सुतेषु सर्वोत्तम इति। बभासे मध्यमपाण्डवो मुक्ताहारे मध्यमणिरिव पाण्डुसुतेषु सुतराम्। समतोषयच्च जनमनांसि। अत्रापतुस्तौ च दंपती समासाद्य सुकुमारमेनं कुमारं जयन्तमिव शची-

पुरन्दरस्यानन्दमतिवेलम् । बाल्य एवाधत्त चिह्नानि शतक्रतसूनुः भाव्यन्याद्दशस्त्रप्रभावविलसितानाम् । एवमुक्त्वा संक्षेपतस्तस्य चरितं परितो यथादृष्टं पवित्रेऽत्र ग्रन्थे प्रतिपादयिष्यामः सप्रपञ्चं श्रेष्ठगुरु-भक्तिप्रमुखगुणग्रामम् ।

---

## २. ॥ गुरुभक्तिः ॥

चतुर्दशहायनेनार्जुनेन, याते पितरि पंचतां, भ्रातृभिः सार्धं पितृव्यकुलमागत्य द्रोणाचार्यस्य ब्राह्मणोत्तमस्य धनुर्धरगुरोरप्रतिम-साहसस्यान्तेवासित्वमात्मा नीतः । प्रथमं तावत् गुरुणा समादिष्टेषु करणाय कालान्तरे कस्यचित्कार्यस्य, भजत्सु मूकिमानं सुयोधनादिषु छात्रेष्वेकवीरोऽर्जुनः प्रतिजज्ञे सर्वं करिष्यामीति । भूयसी भक्तिरभू-दकुतोभयस्य तस्य विबुधगुरुनिभे स्वगुरौ । अकृतास्त्रोऽपि तेजोनिधे-र्गुरोः प्रसादेन सहजेनात्मप्रभावेण च तत्सेव्यमज्ञातविशेषमपि समनुष्ठातुं प्रतिज्ञातवान् वीरो वितनोति स्वपक्षपातीनि मनांसि सर्वेषामपि सुधियाम् ॥ अध्यतिष्ठत् परां काष्ठां तुष्टेरस्त्रविद्यागुरुरप्युत्तरेण शिष्यस्या-तुलपराक्रमस्य । तथा चोक्तम्—

> "ततोऽर्जुनं मूर्ध्नि तदा समाघ्राय पुनः पुनः ।
> प्रीतिपूर्वं परिष्वज्य प्ररुरोद मुदा तदा ॥"

धनञ्जयः सदा विनयेन भक्त्या च गुरुं पूजयति स्म । अभ्य-स्तविद्यासाफल्यार्थं गुर्वनुग्रहोऽमोघोऽस्यावश्यक इत्यत्र संशीतिर्न क्वापि ।

अमुमेवाशयं निश्चाय मनसि स स्वगुरुमनवद्यविद्यानर्घरत्नाकरं संसेवते स्म। कुरुते स्म चास्त्रविद्याभ्यासमप्रमत्तः। न तुष्यति गुरुः केवलं विनयेन शिष्याणामपि तु तदभ्यस्तविद्यानैपुण्येन च। झटित्येव सूक्ष्ममतिर्लघुगात्रश्चासाववधिजगाम पाटवमन्यादृशं लाघवेन सौष्ठवेन चास्त्रप्रयोगेषु। द्रोणोऽपि शशंस परामभिवृद्धिं मध्यमपाण्डवस्य सर्वेषां पुरतः। बलारातिसूनुरन्धतमसेऽपि बभूव दृढप्रयत्नो विशिखान् प्रयोक्तुम्। निशाम्य तादृशीमत्यद्भुतविद्यासक्तिं प्रियशिष्यस्य सुसन्तुष्टो गुरुरभाषतैवम्।

'प्रयतिष्ये तथा कर्तुं यथा नान्यो धनुर्धरः।
त्वत्समो भविता लोके सत्यमेतद्ब्रवीमि ते॥'

स्थाने स्निह्यति सम्यग् गुरुरुत्तमे शिष्ये। अत एव तमशिक्षयत् स प्रेम्णा रथेषु भूमावपि रणशिक्षाम्। अर्जुनोऽपि नैपुण्यं परमुपलेभे गदायुद्धे सङ्कीर्णयुद्धे कृपाणप्रयोगे च। भक्त्या विशिष्टया चातुर्येणामराणामप्यद्भुतकारिणा च क्रीतमना आचार्यस्तं धनुर्वेदे सर्वाधिकं कर्तुमना लाघवशब्दवेधित्वाद्यप्रतिमचातुर्यभाजनमप्येकलव्यं 'दीयतां दक्षिणोऽङ्गुष्ठो वेतनत्वेन' इति दारुणमादिश्य चकार तद्धस्तमङ्गुष्ठशून्यम्, येन सत्यवागभूद् गुरुरर्जुने।

प्रसमीक्ष्य धार्तराष्ट्रान् पाण्डवांश्च कृतास्त्रानचोदयत् स तान् 'पर्यानयत दक्षिणात्वेन रणमूर्धनि गृहीत्वा जीवन्तं द्रुपद'मिति। सव्यसाचिना तु पूर्वमाश्रुतमेव 'गुरुकार्यं करिष्ये' इति। सुयोधना-

दिषु विफलयत्नेषु पराजितेषु च पाञ्चालराजेन, गुरुमभिवाद्य धनञ्जयोऽग्रजेन सार्धं सन्नद्धो बभूव तमभियोद्धुम् । पातयामास च गुरुसपत्नसेनायां ज्वलन्निव युगान्ताग्निर्हयौघान् सैनिकांश्च बहून् विचित्रेण शरप्रयोगेण । तथा चोक्तम् ---

'शीघ्रमभ्यस्यतो बाणान् सन्दधानस्य चानिशम् ।
नान्तरं ददृशे किञ्चित् कौन्तेयस्य यशस्विनः ॥'

अथ सत्वरमेव

'पाञ्चालस्य रथस्यैषामाप्लुत्य सहसा बली ।
पाञ्चालरथमास्थाय अवित्रस्तो धनञ्जयः ॥
विक्षोभ्याम्भोनिधिं तार्क्ष्यस्तं नागमिव सोऽग्रहीत् ।'

एवमर्जुनो धनुर्वेदे गुरुपूजायां युद्धकर्मणि चाभूदप्रतिमश्रद्धः । तथा चोक्तम् --

'अस्त्रे गुर्वनुरागे च विशिष्टोऽभवदर्जुनः ।'

---

## ३. ॥ अस्त्रकौशलम् ॥

सर्वविधेष्वस्त्रप्रयोगेषु वैशिष्ट्यमाप्तवता नासीत् सव्यसाचिना कोऽपि समानः ज्यानिर्घोषं तस्य शृण्वतां मत्सरिणां धार्तराष्ट्राणां महानुदपद्यत हृदये त्रासः । समादिदेशैकदा द्रोणः दत्त्वा कमण्डलुं सर्वान् शिष्यानुदकानयनाय । मत्वा हि स्वपुत्रमश्वत्थामानं शीघ्रगामिनं ददौ तस्मै कुम्भम् । किन्तु

'पार्जन्येनैव सौऽस्त्रेण पूरयित्वा कमण्डलुम् ।
सममाचार्यपुत्रेण गुरुमायात् स फल्गुनः ॥'

इत्थमाचार्यपुत्रादपि प्रशस्ततरोऽभवत्कुन्तीनन्दनो धियो गुणैर्हस्तकौशलेन च । अन्यस्मिन्नवसरे सर्वान् समानीय शिष्यान् द्रोणो मृन्मयं शिशुकं कृत्वा प्रक्षिप्य गङ्गाजले तानादिदेश वस्त्रबद्धचक्षुषस्तद्भेदनाय बाणैः । चकार सहसैवार्जुनोऽद्भुतं कर्म । तथा हि—

'एतत्क्षणेन बीभत्सुरावापैर्दशभिर्वशी ।
पञ्चकैरनुविव्याध मग्नं शिशुकमम्भसि ॥'

आचार्यस्तु दृष्ट्वा विचित्रं कर्मकौशलमर्जुनस्य प्रीत्या तमालिलिङ्ग । प्रशशंस च तच्चातुर्यं महदस्त्रप्रयोगे । एकदा ब्रह्मवित्तमो द्रोणो जिज्ञासमानोऽन्तेवासिनां प्रहरणज्ञानं, निवेश्य वृक्षाग्रे कृत्रिमं भासं जगाद—

'शीघ्रं भवन्तः सर्वे वै धनूंष्यादाय सत्वराः ।
भासमेनं समुद्दिश्य तिष्ठन्तु संहितेषवः ॥
मद्वाक्यसमकालं च शिरोऽस्य विनिकृत्यताम् ।' इति

न्ययुंक्त च तानेकैकशो गुरुर्लक्ष्यवेधने । परं तु नाशक्नन् दुर्योधनादयो युधिष्ठिरादयश्च लक्षयितुमपि यथावल्लक्ष्यम् । अन्ते चाचोदयत्स मण्डलीकृतकार्मुकमभिनन्द्यसत्वं सव्यसाचिनम् । पृष्टो गुरुणा 'किमु पश्यसि मां भ्रातॄन् वृक्षशाखां वा' इति । सोऽवदच्छिरोमात्रं पश्यामि भासस्येति । अन्वजानादहृष्टरोमा तेन गुरुर्विशिखप्रयोगाय भरतर्षभम् ।

मुक्ते च बाणे न्यपतद्भूमौ शिरो भासस्य खण्डितम् । परिषस्वजे गाढं द्रोणो मुहुरर्जुनं वीक्ष्य तदनितरसाधारणं सामर्थ्यमानन्दसम्फुल्लनयनारविन्दः । चातुर्यमपि तस्य प्रादर्शयद्भीष्माय महात्मने च विदुराय ।

अथ कदाचिज्जगाम मज्जनार्थं सशिष्यः कुरूणां गुरुः स्वच्छोदकामापादयन्तीं पावित्र्यं स्पर्शमात्रेण ब्रह्महत्यादिमहापातकभाजामपि जाह्नवीम् । जग्राह सहसा तं जङ्घान्ते जलमवतीर्णं बलवान् ग्राहः कश्चित् । द्रोणस्तु—

'स समर्थोऽपि मोक्षाय शिष्यान् सर्वानचोदयत् ।
ग्राहं हत्वा मोक्षयध्वं मामिति त्वरयन्निव ॥'

तद्वाक्यसमकालमताडयत् सर्वशस्त्रकुशलः पार्थो विसम्मूढेष्वितरेषु निशितैः शरैरम्भसि मग्नं स्वगुरुद्रोहिणं ग्राहम् । पञ्चत्वमापेदे स दुष्टजन्तुः खण्डशः परिकल्पितो बाणैर्विहायास्य महात्मनो जंघाम् । प्रियशिष्यस्यातिदुष्करमस्त्रकौशलं प्रत्युत्पन्नमतित्वं च निशाम्य गुरुरमन्दानन्दतुन्दिलोऽभवत् । ददौ च तस्मै सर्वशास्त्रपारावारपारीणाय देवगन्धर्वादिभिरप्यप्रसह्यवीर्यमुत्तमं किञ्चनास्त्रं ब्रह्मशिरो नाम ।

गच्छता कालेनाधिगतसमस्तशस्त्रविद्यातत्त्वाञ्छिष्यानादिदेश द्रोणो रङ्गभूमौ स्वस्वशिक्षानैपुण्यप्रदर्शनाय संमिलितेषु प्रेक्षागारे कुतूहलमासमानप्रफुल्लमुखपुण्डरीकेषु स्वस्वेष्टधनुर्धरान् प्रोत्साहयितुं बहुषु प्रेक्षकेषु । ततः स रङ्गाङ्कणगतोऽब्रवीत्—

'यो मे पुत्रात्प्रियतरः सर्वास्त्रविदुषां वरः ।
ऐन्द्रिरिन्द्रानुजसमः स पार्थो दृश्यतामिति ॥"

सकार्मुको ब्रह्मचारी बद्धगोधाङ्गुलित्राणः कृतस्वस्त्ययनस्तदा पार्थो विरराज विभ्रदाष्टापदं कवचं सेन्द्रायुधतडित्तोयद इव । दृष्ट्वा च तं प्रेक्षकाः शंसन्तः स्तनितगम्भीरनिःस्वनेन तद्बहुविधशुभविश्वजनीनगुणांश्चक्रू रोदसी शब्दमये इव । नरशार्दूलः पृथासूनुः प्रादर्शयन्नानाप्रकारमस्त्रलाघवम् । तथा हि—

'आग्नेयेनासृजद्वह्निं वारुणेनासृजत्पयः ।
वायव्येनासृजद्वायुं पार्जन्येनासृजद्घनान् ॥'

एवमन्यांश्चासावस्त्रप्रयोगानद्भुतान् प्रादर्शयदोजस्विनां वरः । यथा हि— प्रयुज्य विविधान्यस्त्राणि ददृशे स क्षणेनान्तर्हितः क्षणेन ह्रस्वः क्षणेन प्रांशुः क्षणेन रथासीनः क्षणेन चावतरन्महीम् ।

'भ्रमतश्च वराहस्य वाहस्य प्रमुखे स्थितः ।
पञ्चबाणान्नसंयुक्तान् स मुमोचैकबान्धवान् ॥
गव्ये विषाणकोषे च बालरज्ज्वावलम्बिते ।
निचखान महावीरः सायकानेकविंशतिम् ॥"

इत्येवमादीनन्यांश्च प्रदर्श्य प्रयोगानपुपूरत्प्रेक्षकमनांसि हर्षेण दिगन्तरालञ्च कीर्त्या । तदा मेनिरे जना असमभुजबलोऽयं वशीकुर्यात्परिखीकृतसागरां महीमिति ।

---

## ४. ॥ महावीरता ॥

लोकेऽतिविरला भवन्ति महावीरा अर्जुनसदृशाः। तादृशो वीरो लोके न कोऽपि विद्यत इत्यत्र न काप्यतिशयोक्तिरित्यस्माकं मतम्। धैर्यमोजः पराक्रमो दया दाक्षिण्यमित्यादयो गुणा महावीरताद्योतकाः सर्वेऽपि सामग्र्येण तं भेजिरे। राज्ञो द्रुपदस्य ग्रहणमपि प्रथयति धनञ्जयस्यासदृशं लोकातिशायिनं पराक्रमम्। दृष्ट्वा तु पाण्डवो विफलयत्नान् दुर्योधनादीनुवाच गुरुम्—

'एषां पराक्रमस्यान्ते वयं कुर्याम साहसम्।
एतैरशक्यः पाञ्चालो ग्रहीतुं रणमूर्धनि ॥' इति।

आत्मविश्वासस्तावत्प्रधानं साधनं वीरस्येत्यत्र न कापि विप्रतिपत्तिः कृतधियाम्। अत्र नमुचिसूदनसूनुः स्वामोघसारं जानन्नेव सफलीचकार प्रतिज्ञां पूर्वं गुरवे दत्ताम्। सिद्धे हि कार्ये प्रलयाग्निवत् द्रुपदसेनासंहारकारिणं न्यवारयद् भ्रातरं मारुतात्मजमयं यथार्थवेदी सान्त्ववचनैः। उवाच चैवम्—

'सम्बन्धी कुरुवीराणां द्रुपदो राजसत्तमः।
मा वधीस्तद्बलं भीम गुरुदानं प्रदीयताम् ॥"

नासीदेवार्जुनस्य द्रुपदे कोपः। केवलं गुरुदक्षिणाप्रदानार्थं तेन चोदितः स तमियेष ग्रहीतुं, न तु स्वाकुण्ठबाहुबलं प्रदर्शयितुम्। अयमेव विशेषो वीरस्य दृप्ताद्बलशालिनः।

अथ यौवराज्याभिषिक्ते युधिष्ठिरे, गम्भीरः सरस्वानिव, स्थिरो

हिमवानिव धृत्या, धीमानर्जुनः करदीकृताशेषभूभृन्मण्डलो जघान सपत्नान् सौवीरादीन् समरे घोरे । अपि च—

'न शशाक वशे कर्तुं यं पाण्डुरपि वीर्यवान् ।
सोऽर्जुनेन वशं नीतः स राजा यवनाधिपः ॥'

सुतरामतप्यन्त दुष्टा धार्तराष्ट्रा दृष्ट्वा महापराक्रमशालिनमेनम् । विस्मयश्च महान्मनसि समुद्भूत्तेषां यत् कृतवान् पञ्चदशहायनः पार्थोऽद्भुतमतिदुष्करं साहसमिति । श्रुत्वा पितामहो भीष्मः सत्यधर्मा लाक्षागृहे पाण्डवानां निधनं शुशोचातितराम् । तत्राप्येवं जगाद सव्यसाचिनमन्तरेण—

'अतित्यागी च योगी च क्षिप्रहस्तो दृढायुधः ।
दूरपाती त्वसम्भ्रान्तो महावीर्यो महास्त्रवित् ॥
अदीनात्मा नरव्याघ्रः श्रेष्ठः सर्वधनुष्मताम् ।
ख्यापितं येन शूरेण त्रिषु लोकेषु पौरुषम् ॥
पुरन्दरसमो जिष्णुः कथं कालवशं गतः ।'

द्रुपदोऽप्यर्जुनं याज्ञसेनीजानिं कर्तुकामस्तन्निधनं जतुगृहदहने कर्णाकर्णिकया आकर्ण्य वितथप्रतिज्ञतां चात्मनो विचार्य सन्तापं भृशमवाप । महावीर्यस्य लोकातिशायि धैर्यममानुषसुलभं पराक्रममतुलमोजो मनोहरं च रूपं स्मारं स्मारमेवं शुशोच—

'अहो वीर्यमहो धैर्यमहो धीर्यं च शिक्षितम् ।
चिन्तयामि दिवारात्रमर्जुनं प्रति बान्धवाः ॥'

स्वविजेतारमपि फल्गुनं जामातृत्वेन स्वीकर्तुमिच्छन् द्रुपद एव परं प्रमाणमस्य बाहुशालित्वस्यानितरसाधारणस्य तेजसश्च ।

रात्रिन्दिवं तुमुलयुद्धप्रवृत्तयोर्भीमहिडिम्बयोर्नान्यतरोऽपि शशाक विजेतुम् । अत्रान्तरे भीमस्य विज्ञाय परिश्रमं महान्तमर्जुनस्तत्साहाय्यं कर्तुमियेष । न कोऽप्युपेक्षते वीरोऽन्यं सत्यकर्माणं घोरे संयुगे । अत्र पुनर्भ्रातुः साहाय्यकरणमुचितमुपपन्नं च । सत्येवमभाणीत्–

'पूर्वरात्रे प्रबुद्धोऽसि भीम क्रूरेण रक्षसा ।
क्षपा व्युष्टा न चेदानीं समाप्नोषि महारणम् ॥
आतिष्ठे तव साहाय्यं शीघ्रमेव तु हन्यताम् ।
अथ वा ह्यहमेवैनं हनिष्यामि वृकोदर ॥
कृतकर्मा परिश्रान्तः साधु तावदुपारम ।'

द्रौपदीस्वयंवरमहं द्रष्टुमुत्सुका विप्रैः सार्धं प्रतस्थिरे विप्रवेषधारिणः पाण्डवाः पाञ्चालनगरम् । मध्येमार्गमस्तङ्गच्छति चन्द्रमस्युल्मुकेनाध्वानं संप्रकाश्य गच्छति स्माग्रतो धीरो रक्षार्थमितरेषाम् । भागीरथीमागतवतस्तान्वीक्ष्यातिमात्रं चुक्रोध स्त्रीभिः सह क्रीडन् जले गन्धर्वराजश्चित्ररथो नाम । कत्थमानश्च रुरावोच्चैर्यक्षगन्धर्वादीनां कामचाराय विहितायां रात्रौ तत्रागन्तुं न कोऽप्यधिकारो मनुष्याणामिति । तदाऽर्जुनोऽङ्गारवर्णस्यात्रिगणयन्नेव भर्त्सनमुवाच–

'समुद्रे हिमवत्पार्श्वे नद्यामस्यां च दुर्मते ।
रात्रावहनि सन्धौ वा कस्य क्लृप्तः परिग्रहः ॥

'वयं च शक्तिसम्पन्ना अकाले त्वां च धृष्णुमः ।
अशक्ता भवने क्रूरान् युष्मानर्चन्ति मानवाः ॥'

तस्य तद्वचनं श्रुत्वा क्रुद्धो गन्धर्वः कार्मुकमुद्यम्य प्रायुंक्त सायकानर्जुने। स त्वाग्नेयास्त्रेण गुरुदत्तेन भस्मीकृत्य रथमङ्गारवर्णमपातयदवाङ्मुखं भूमौ। जग्राह च तमचेतनं शिरोरुहेषु। दृष्ट्वा तु महतीं भर्तुर्विपदं शरणं प्रापद्यत युधिष्ठिरं गन्धर्वभार्या कुम्भीनसी नाम। करुणार्द्रचेता धर्मराजोऽनुजेन गन्धर्वममोचयत्। अर्जुनोऽप्यवादीदेवं परितप्यमानं चित्ररथम्—

'अङ्ग(वे?) मां प्रतिपद्यस्व गच्छ गन्धर्व मा शुचः।
प्रदिशत्यभयं तेऽत्र कुरुराजो युधिष्ठिरः॥'

तदनन्तरं बह्वीः कथाः कथयन्तौ तौ सुहृदौ भूत्वानुमेनाते स्वास्त्रपरिवर्तनम्। विजयस्यैच्छदाग्नेयास्त्रं गन्धर्वः। तत्स्थाने स प्रतिज्ञातवान् स्वकीयानि दिव्यास्त्राणि तस्मै दातुम्। अर्जुनो बाढमित्युक्त्वा स्वास्त्रं तस्मै प्रददौ। महापुरुषा हि सदा साहाय्यमवराणां वितन्वन्ति। न विद्यते च तेषु मिथ्याभिप्रायोऽवरादुपकृतिस्वीकारो प्रतिष्ठाहानिहेतुरिति। वीराः पीडयन्ति न कमप्यकारणम्। किन्तु त आत्मविभूतिभङ्गो यथा न स्यात् तथा कुर्वन्ति कार्यम्। भास्वत्स्फुरत्तेजसोऽस्य विक्रमस्यासीन्निदानं दृढं ब्रह्मचर्यमेव। अमुमेवार्थं प्रशंसागर्भैर्वचनैरवोचद् गुह्यकः—

'ब्रह्मचर्यं परो धर्मः स चापि नियतस्त्वयि।
यस्मादस्मादहं पार्थ रणेऽस्मि विजितस्त्वया॥'

पाण्डवानामनुरूपं पुरोहितमपि स समाचचक्षे धौम्यनामानम्।

निजगुरुणार्जुनविषये समाश्वासितो द्रुपदः कौन्तेयानन्विच्छन् कारयामास सुतास्वयंवरार्थं दृढं किञ्चिद्धनुः। सर्ववर्णयुक्ते सदस्यैन्द्र इव कार्मुके विराजमाने कथयामास स्वरेण स्तनितगम्भीरघोषेण धृष्टद्युम्नो लक्ष्यवेधपणं वीरबाहुवीर्यपरीक्षकम्। धनुषोऽतिभारभूतत्वात् सुयोधनादिषु वीरेषु निर्गतेषु हताशेषु, ब्राह्मणा अप्याहूतास्तद्धनुषा लक्ष्यवेधनाय। तदा पीनस्कन्धोरुबाहुर्विप्रवेषोऽर्जुनः प्रोत्साहितः कैश्चिद्गर्हितोऽन्यैश्च महत्तद्धनुरुपसृत्याकरोत् प्रदक्षिणम्। अथ—

'सज्यं च चक्रे निमिषान्तरेण शरांश्च जग्राह दशार्धसंख्यान्।
विव्याध लक्ष्यं निपपात तच्च छिद्रेण भूमौ सहसातिविद्धम्॥'

वरवर्णिनी दर्शनीयाङ्गी पद्मपलाशायताक्षी सा वीक्ष्य लक्ष्यं विद्धं हासं विनाऽपि हसन्तीव वाचं विनाऽपि दृष्ट्या व्याहरन्तीव माल्यहस्ता स्मितद्विगुणितमुखचन्द्रशोभोपाजगाम कुन्तीसुतम्। प्रत्यक्षेपि च माला तस्य कण्ठे शङ्कोपने सन्नताङ्गी। अवापन्मुदं परां सा तं प्राप्य—

'शचीव देवेन्द्रमथाग्निदेवं स्वाहेव लक्ष्मीश्च यथा मुकुन्दम्।
उषेव सूर्यं मदनं रतीव महेश्वरं पर्वतराजपुत्री॥
रामं यथा मैथिलराजपुत्री भैमी यथा राजवरं नलं हि।'

तदनन्तरं संप्राप्ते महति युद्धेऽर्जुनो भ्रात्रा सह सर्वान् कर्णसुयोधनादीन्विद्राव्य स्वगृहमगमत्। करिष्यतेऽस्यार्थस्य विस्तरोऽस्माभिरन्यत्र। अर्जुनस्य युद्धेऽप्रधृष्यत्वं भगवता कृष्णेनैव शंसितम्—

'भीमानुजो योधयितुं समर्थ एको हि पार्थःससुरासुरान् बहून् ।
अलं विजेतुं किमु मानुषान् नृपान्' इति ।

अथ कदाचिद् वसत्सु पाण्डवेषु खाण्डवप्रस्थे कश्चन विप्रो न्यवेदयदर्जुनाय बाष्पगद्गदकण्ठो नृशंसैश्चोरैर्ह्रियमाणं निजं गोधनम् । प्रविशति यदि स शस्त्रग्रहणाय शय्यागारं तर्हि महानधर्मस्तस्य भवेच्छपथविरोधेन । आर्तरक्षणाभावे महदयशश्च समापतेत् । एवं द्वैधीभूते स्वमनसि स दृढनिश्चयं चकार गोधनत्राणाय ।

'अधर्मो वै महानस्तु वने वा मरणं मम ।
शरीरस्यापि नाशात्तु धर्म एव विशिष्यते ॥' इति ।

जगच्चकम्प इव तस्य भीषणप्रतिज्ञया । राजानमभिवाद्य प्रहरणान्यादाय स चोराननवधावत् । आनिनाय च सर्वा अपि गाः खण्डयित्वा शरैश्चोरान् । एवं सर्वेष्ववसरेषु परोपकार आसीद्वीरस्यास्य श्रेष्ठो धर्मः ।

वनवासकालेऽहन्येकस्मिन्नभिषेकं कृत्वाग्निकार्यचिकीर्षया पुण्यजलाया गङ्गाया उत्तितीर्षुमपाकर्षदर्जुनं मदनशरविद्धा नागकन्यकोलूपी नाम । अनङ्गमथितां तोषय मामात्मनो रहःप्रदानेनेति तया याचितः नागराजस्य कौरव्यस्य भवने कृताग्निकार्यश्चैवमवादीत्—

'ब्रह्मचर्यमिदं भद्रे मम द्वादशमासिकम् ।
धर्मराजेन चादिष्टो नाहमस्मि स्वयंवशः ॥'

तच्छ्रुत्वा वामलोचना निजगाद दीनवचना—

'परित्राणं च कर्तव्यमार्तानां पृथुलोचन ।
कृत्वा मम परित्राणं तव धर्मो न लुप्यते ॥' इति ।

अन्यथा मृतां मामुपधारयेति रुदतीं शरणागतां तां मत्तकाशिनीं तोषयामास तस्यामेव निश्याश्रितवत्सलो धनञ्जयः । उत्पादयामास च तस्यामिरावन्तं महाबलपराक्रमं पुत्रम् । शरणागतवात्सल्यं हि महात्मसु महावीरेष्वनारतं प्रभूतं जागर्ति । तस्मादर्जुनो विषयसुखमन्वभूदिति सहसाऽभिधानस्य प्रमाणं न किमपि विद्यते । परसुखदुःखवेद्येव स तेषां वितनोति स्म साहाय्यम् ।

ततोऽदृश्यन्त पञ्च तीर्थानि वर्जितानि तापसवरैः समुद्रवेलया गच्छता किरीटिना । विज्ञाय च कारणं वर्जितत्वे तेषां ग्राहा इति शूरोऽकुतोभयो न भीत ईषदपि ग्राहेभ्यो वार्यमाणोऽपि तपोधनैर्मज्जनाय जगाम तानि तीर्थानि । कथं नु बिभेति शूरैः सुरासुरैरप्यधृष्यवीर्योल्पेभ्यो ग्राहेभ्यः । अहो कौन्तेयस्यासदृशविक्रमस्य प्रतापो धृतिश्च । सहसा विगाह्य तीर्थं सौभद्रं स चकार मज्जनम् । क्षणाच्च जग्राह कश्चन ग्राहो नरव्याघ्रम् । उदाचकर्ष स विस्फुरन्तमेनं बलेन जलात् । एतत्साहसस्य फलत्वेनान्ते शापमुक्ता बभूवुः पञ्चाप्सरसः ।

सञ्जातनूतनसम्बन्धोऽर्जुनेन कृष्ण इन्द्रप्रस्थे वसन्नेकस्मिन्नहनि तेन सहासह्योष्णकाले जगाम सुहृत्परिवृतो यमुनां नदीम् । तत्र ललनासहितयोस्तयोर्विहारमन्यास्मिन् प्रस्तावे प्रपञ्चयिष्यामः । विहरतोस्तयोरेत्य सकाशं कश्चिच्चीरवासा जटाधरो विप्रो बहुबुभुक्षितोऽयाचतात्मनस्तृप्तिम् । आश्रुतायां च ताभ्यां तस्यां स पावकत्व-

मात्मनोऽभिप्राय दग्धुमैहत तन्महास्त्रनिवारितमहेन्द्रसंरोधमाराद् दृश्यमानं खाण्डवकाननम्। सत्यप्रतिज्ञस्तु धनञ्जयः स्वदिव्यास्त्रयोग्यं धनुः सुदृढं मेघनिर्घोषं रथं वातरंहसो दिव्याश्वांश्चायाचत भगवन्तं जातवेदसं कर्तुमवितथं स्ववचनम्। हव्यवाहनोऽपि देवं वरुणमाकार्य ध्यानेन जगाद गाण्डीवं धनुरिषुधी दिव्याश्वसमायुक्तं कपिलक्षणं रथं च देहि पार्थायेति। दत्तं च तेन किरीटिने सर्वमपि। उपलभ्य सर्वशस्त्रैरनाधृष्यं धनूरत्नमक्षय्यौ महेषुधी दिव्याश्वयुजं रथं च शुशुभे सुतरामरिन्दमः। दृढविश्वासो बभूव च विजेतुं स्वविक्रमेण महेन्द्रमपि स्वपितरम्। अभिदधे चैवम् ---

'यदि खाण्डवमेष्यति प्रमादात् सगणो वा परिरक्षितुं महेन्द्रः।
शरताडितखण्डकुण्डलानां कदनं द्रक्ष्यति देववाहिनीनाम्॥'

दग्धुं प्रचक्रमे परिरक्षितमरण्यं पार्श्वयोः सायुधाभ्यां कृष्णार्जुनाभ्यां भगवाञ्ज्वालाजिह्वः। बहूनि गतानि विलयं भूतानि दावे कृत्वा महदाक्रन्दितम्। वार्तामेतां श्रुत्वा देवेभ्यो देवराडभ्यवर्षत् सहस्रशो जलधाराः। ताः सममेव न्यवारयत् सव्यसाची शरवर्षैः। सञ्जातमहासंरम्भो दम्भोलिप्रहरणो व्यसृजत् फल्गुने दिव्यास्त्राणि। शरसम्पातदुर्दिनं तुमुलं युद्धमभवत्तदा कृष्णसंहितस्यार्जुनस्य तथा लोकपालादिभिः स्कन्दादिभिश्च समेतानां देवानाम्। रोदःकुहरं समदृश्यत घनीभूतमिव तिमिरं धूमपरीतम्। तनुते स्म स्वकर्मापि वह्निरविगणयन्निव कोलाहलम्। धावन्ति स्मेतस्ततो भयादर्जुनबाणाहता रक्तोक्षितकलेवराः सुराः। शक्रोऽपि कृष्णार्जुनयोर्दृष्ट्वा वीर्यं विचित्रं

परमप्रीतो भूयश्च सव्यसाचिनो विक्रमं जिज्ञासुरश्मवर्षं व्यसृजत्। किन्तु—

'सोऽश्मवर्षं महावेगैरिषुभिः पाकशासनिः।
विलयं गमयामास हर्षयन् पितरं तथा॥'

क्षिप्तं मन्दरशिखरमपि विध्वंसयामासार्जुनो वज्रसन्निभैर्बाणैः। व्यापादिता बहवः पक्षिगणाः श्वापदयूथानि दानवनिशाचराश्च पतता पर्वतश्रृङ्गेण। पतितैस्तैश्च सर्वभूतात्मनो रूपमत्युग्रमभवत्। स यथेष्टं ददाह काननं निविडतरुपूरितं दह्यमानप्राणिशरीरनिर्गतेन रवेण कुर्वन्निव महान्तमानन्दनिनदम्।

पराङ्मुखेषु विफलयत्नेषु सुरेषु कृष्णपाण्डवपराक्रमप्रशंसिनं शक्रमशरीरिणी वागब्रवीत्।

'नरनारायणावेतौ तावेतौ लोकभावनौ।
नैतौ शक्यौ दुराधर्षौ विजेतुममरैरपि॥' इति।

तौ वीरौ गते देवराजे दाहयामासतुर्दावं निश्शङ्कमाहत्यैकविंशतिं दिनानाम्। आर्तेष्वात्तकरुणो धनञ्जयः शरणं प्रपन्नं मयासुरं जिघांसोर्वासुदेवाद्भीतमभयदानेनोज्जीवयामास। ततश्च—

'वसामेदोवहाः कुल्यास्तत्र पीत्वा च पावकः।
अगच्छत् परमां प्रीतिं दर्शयामास चार्जुनम्॥'

ततोऽमरराजः—

'यदा प्रसन्नो भगवान् महादेवो भविष्यति।
तदा तुभ्यं प्रदास्यामि पाण्डवास्त्राणि सर्वशः॥'

इति वरं दत्वा परमप्रीतो दिवमगात् ।

द्वैतवने वसतो राष्ट्रभ्रष्टान् पाण्डवानुपागत्य प्रत्यक्षधर्मा विदितवेद्यो भगवान् तपःप्रभावनिःशेषनाशिताखिलपाप्मा व्यासमहर्षिः, 'कौरवान्निजेतुं दिव्यं महाशक्तियुक्तमावश्यकमस्त्रम् । तच्चार्हति सम्पादयितुं तपसा मध्यमपाण्डव एवे'त्युक्त्वा, विद्यामुपदिदेश तपःसिद्धये । इदमेव दिव्यास्त्रलाभरूपं महाभारतीयं वस्तु सम्यग्वर्णितं स्वकीये किरातार्जुनीयनामके महाकाव्ये महाकविना विदग्धवृन्दपद्माकररविणा भारविणा । विद्यामुपलभ्य दिव्यामग्रजाद्युधिष्ठिरादर्जुनः कवची धन्वी च भूत्वा ययौ गिरिमिन्द्रकीलकं तपसा तोषयितुं भगवन्तमुमाकान्तम् । सुश्लाघ्यसत्त्वस्य पश्यत महद्धैर्यं कर्तुमतिदुष्करमपि कर्म । पर्वतं प्राप्य प्राविशत्स तमालवलयश्यामं किन्नरीकेलिसङ्गीतदत्तकर्णकुरङ्गकं नृत्यच्छिखण्डिवलयं यमुनाजाह्नवीशीकरवाहिनभस्वद्वीजितनभोमण्डलं शान्तं तपोवनम् । तत्र च निराहारो जितेन्द्रिय ऊर्ध्वबाहुर्निरालम्ब एकपादानतांगुष्ठनखाग्रस्पृष्टभूतलस्तस्थौ स्मरन् देवं स्थाणुं स्थाणुरचल इव । अत्रान्तरे भगवान् हरः कैरातं रूपमास्थाय तमुद्देशमाययौ । पार्थो जघान जिघांसन्तं निशितैरिषुभिः सूकररूपिणं दैत्यम् । अताडयच्छबरोऽपि तं समकालम् । सञ्जातरोषोऽनेन किरीटी धर्मविरोधमाचरन्तं तमधिक्षिप्यावर्षदविश्रान्तं हेमपुङ्खाञ्छरान् । वज्रसाराभे तस्य शरीरे विशीर्णा निपेतुः सर्वेऽपि पार्थेरिता विशिखाः । ततो विस्मितः क्रुद्धश्च तमताडयद्गाण्डीवेन चूडाग्रे । एवं सर्वोऽपि यत्नोऽस्य विफलोऽभवत् । अवसाने बली किरातस्तु—

'अथार्जुनं दीर्घभुजो भुजपञ्जरवर्तिनम् ।
निष्पीड्य निबिडं भूमौ स निश्चेष्टमपातयत् ॥'

निपतिते च तस्मिन् भगवान् भूतिविभासितभूरितनुप्रभो भवः साक्षादभाषत वत्सस्य दृष्ट्वा धैर्यममर्यादमूर्जितं च पराक्रमम् ।

'उत्तिष्ठ पश्य मां पार्थ शौर्यमुन्मुद्रितं त्वया ।
दिव्यं गृहाण नयनं तुष्टस्ते विक्रमादहम् ॥' इति ।

साक्षाद्विलोक्य भूतिधवलं शूलिनं वृषवाहनं तुष्टाव धन्यमानी मानवतां वरः पूरुवंशमणिः—

'नमः श्रुतिरथस्थाय त्र्यक्षाय त्रिपुरच्छिदे ।
गजासुरतमःकूटापाटनस्पष्टभानवे ॥
नमस्ताम्भितजम्भारिभुजस्तम्भाय शम्भवे ।
नमो भिन्नाञ्जनश्याममूर्तये भैरवात्मने ॥' इति ।

ततस्तुष्टो महेश्वरोऽर्जुनाय प्रादात् सङ्कल्पप्रार्थितं प्रत्यक्षविग्रहं पाशुपतास्त्रम् । लोकपालाश्च ददु. स्वस्वास्त्राणि विज्ञाय समरमूर्धनि तेन कर्तव्यं भविष्यति महत्सुरकार्यमिति । इन्द्रोऽपि दातुं स्वकीयान्यप्यस्त्राणि तमाहूतवांस्त्रिदिवाय । मातल्यानीतेन विमानेन गत्वा पुरीममरावतीं लब्ध्वा शक्राद्दिव्यास्त्राणि सहायकं चित्रसेनं च पार्थः परिवृतोऽप्सरोभिर्जितेन्द्रियः पञ्चवत्सरांस्तत्रोवास ।

राज्यहानिदुःखेन निस्तेजस्कान् पञ्जरबद्धकेसरिण इव विपत्पङ्कनिमग्नान् पाण्डवान् वने वीक्ष्य स्ववैरसाधनेन कृतार्थानात्मनः कर्तुमाजग्मुस्तत्र नीचैः कर्णादिभिः प्रचोदिता धार्तराष्ट्राः । ततः सुर-

स्तीरे परिचारपरिवृतेन गन्धर्वराजेन चित्रसेनेन खण्डितबाहुबलेषु दृप्तेषु तेषु, गृहीते च जीवग्राहं सुयोधने, निराश्रयाः साध्वसविह्वला-स्तद्योषितः मानुजं शरणं जग्मुर्धनंजयनन्दनम् । ज्येष्ठभ्रात्रादिष्टो ययौ गाण्डीवधन्वोदारचेता निजदिव्यायुधैर्भूषितो बन्धनात् शोचनीयदशा-निमग्नं क्रूरवैरिणं मोचयितुम् । प्रयुक्तमात्रेष्वस्त्रेषु तेन, भृशसंरब्धा गन्धर्वास्तत्स्यन्दनं भेत्तुमुद्ययुः । गन्धर्वमायया सान्धकारे कृत्स्ने जगति धनञ्जयस्तीव्रप्रयुक्तेनानलास्त्रेणावधीद्बहून् गन्धर्ववीरान् । तदा क्रोधोद्गीर्णस्फुलिङ्गदीप्तनेत्रश्चित्रसेनो विपुलां गदां मायां च प्रायुङ्क्त । स यथैकस्ते छित्वा विमोहनास्त्रेण गन्धर्वराजश्चकार मूर्च्छितम् । तथा-भूतं तं दृष्ट्वा वयस्यवधशङ्कया संगृह्णति निजास्त्राणि पाकशासनौ, गन्धर्वः 'सखे नैतद्युक्तं ते यदतिनीचं त्रायसे रिपुम् । पापोऽयं लक्ष्मीमदाध्मातः कृशान्वो वने द्रष्टुमागतः पुरन्दराज्ञया बद्धो मया' इति सुमधुरं वचनमाददे ।

'इत्याकर्ण्यार्जुनः प्रीत्या प्रसाद्य सुहृदं प्रियम् ।
उवाच त्यज्यतामप धर्मराजगिरा पशुः ॥"

एवमानुषविक्रमेण किरीटी धर्मपरायणो द्वेषिणोऽपि परित्रायते स्वा-सहायान् । आमनन्ति हि धर्मविदो वीरेण कष्टां दशामपन्नः शत्रुरपि परिरक्षणीय इति ।

महाभारतयुद्धानन्तरं प्रायश्चित्तहयमेधार्थमर्जुनो यज्ञहयानुसारी देशाद्देशं गच्छन् सिन्धुदेशं प्राप्य क्रूरैः सैन्धवयोधिभिः सुचिरमकरोद् घोरं जन्यम् । तदा रणवत्सला दुःशलाऽश्रुधाराक्लिन्नमुखी जयद्रथ-

पौत्रं शिशुमादाय प्रपेदे शरणं सव्यसाचिनम् । ततः—

'भ्रातस्त्वयि समायाते त्वन्नामैव निशम्य मे ।
पुत्रो जायद्रथिर्यातः पञ्चतां स्फुटिताशयः ॥
तत्सुतो मम पौत्रोऽयं स्वस्त्रेयतनयस्तव ।
रक्ष्यः सर्वात्मनेत्युक्त्वा रुरोद धृतराष्ट्रजा ॥'

प्रसिद्ध चैतद्यन्महावीरा अबलासु विशेषादराः करुणाशीलाश्च भवन्ति । अबलायास्तस्या रुदितेन करुणार्द्रचित्तः स तां समाश्वास्य निन्दन्निजां क्षत्रजातिमन्यत्र ययौ । इत्थमस्माभिः प्रपञ्चितोऽर्जुनस्य लोकैकवीरस्य विविधोऽत्याश्चर्यहेतुर्विश्वहितसाधको विक्रमः ।

---

## ५. ॥ पूज्येष्वादरः ॥

अर्जुनस्य महती श्रद्धा वन्द्यजनेष्ववर्तत न कदाऽपि शुश्रूषते स्म स गुरून् वा भ्रातॄन् वोत मातरमनादरेण । विनीतो मधुरया मनोहारिण्या भक्तिबाहुल्यकृतपावित्र्यया गिरा प्रेमपात्रं बभूव पूजार्हाणाम् । धृतराष्ट्रेऽपि पाण्डवदुःखशल्यनिघातहेतुभूते स न कदाप्यनादरं प्रादर्शयत् । किन्तु भक्तिपुरःसरं ववन्दे पितरं लब्धावसरः । पितामहे स्वानिवार्यवीर्यकम्पिताशेषलोके भीष्मे च महत्यासीत्तस्य भक्तिः । सोऽपि दृष्ट्वा विनयं सौजन्यं च धनञ्जये विशेषप्रीतो बभूव । एक एवायं वीरः सर्वाँल्लोकान् वशीकुर्यादिति निश्चित्य स किरीटिनमपूर्वाभिमानपूर्वकं पश्यति स्म । समापतिते तु महति युद्धे, गुरु-

भ्रातृपितृपितामहादीन् पूज्यान् हन्तुं न इयेष फल्गुनः। एतादृशमनश्वाश्चर्यस्य तावत् पूज्येषु तस्यादरो गौरवं रूढमूला भक्तिरासक्तिश्च। शत्रुपक्षपातिनोऽपि सुगृहीतनामधेयान् भीष्मद्रोणादीन् रणोपक्रमे गुरून् स भक्त्याऽभिवादयते स्म। पूर्वजानामाशीर्वचनं निःश्रेयसाय कल्पतेऽनल्पायेति साधुवचनं सोऽन्ववर्तत मनसा वाचा कर्मणा च। स उत्तरगोग्रहणयुद्धे गुरुं स्वयमेव प्रथमं योद्धुं नाकामयत। यतस्तस्य द्रोणे बभूवतुर्विशिष्टाऽनुरागो भक्तिश्च। प्रथममस्त्रप्रयोगो गुरावनादरमिव सूचयेदिति मत्वा स तथा चकार।

'पूर्वं न प्रहरामीति पार्थेन विनयात् पुनः।
विज्ञप्तः प्राहिणोत् बाणान् स्मयमान इवाशु सः॥'

पितामहं हन्तुमीरितो वासुदेवेन

'धनञ्जयोऽथ निःश्वस्य विषण्णवदनाम्बुजः।
निन्दन् मुहुः क्षत्रधर्मं पितामहमुपाद्रवत्॥'

उपपन्नानि हि बालकानां पितृषु विनयो नम्रता दाक्षिण्यं च। गोब्राह्मणेषु च निःसीमाभवत्तस्य भक्तिः। तेषां हितायातिमहदपि कष्टं मन्यते स्म स तृणाय। ददाति स्म च विप्रेभ्यो दानदक्षिणाः।

'प्रददौ गोसहस्राणि यज्ञानुद्दिश्य दक्षिणाः।
निवेशांश्च द्विजातिभ्यः सोऽददात् कुरुसत्तमः॥'

अन्तरा तदाशीर्वचनं स नारभते स्म किञ्चिदपि कार्यम्। परिपुष्टश्च तेन चकारातिदुष्कराणि कर्माणि। बहुमन्यन्त तेऽपि विप्रा दीर्घबाहुं विनयानिनम्रमन . . . . नभोजयित्वा नाहारमकरोत् स सकृदपि।

गाः पर्यवर्तत च बहुतरं शत्रून् सम्यग्दण्डयित्वा। तस्य भ्रातृप्रेम सर्वलोकादरणीयमासीत्। नात्यक्रामत् स सकृदपि भ्रातुराज्ञाम्। वेदवाक्यमिव भ्रातृवचनं प्रमाणमासीत्तस्य सर्वेषु कार्येषु। तथा चोक्तम्-

'धैर्यात्सत्याच्च धर्माच्च विजयाच्चाधिकप्रियः।
अर्जुनो भ्रातरं ज्येष्ठं नात्यवर्तत जातुचित्॥'

दुरोदरच्छद्मजितसर्वस्वमपि भ्रातरं स वृकोदर इव नावामन्यत। किन्तु जघमप्यात्। सर्वदाऽपि तमेव युधिष्ठिरो दिग्विजयादिकार्येषु नियुक्तवान्। अर्जुनोऽपि भ्रातरं प्रणम्य तदाशीर्वचनद्विगुणितकायसारो जयलक्ष्म्या परिगृहीतः सदा पर्यवर्तत देशान्तरेभ्यः। कथं नु विजयो मूर्तिमानिव विजयः पराजितो भवेत्। भ्रातुराज्ञापरिपालनाय स गन्धर्वराजेन सह युद्धं कृत्वा दृप्तं दुर्योधनमपि बन्धनादमोचयत्, अस्य विस्तरस्त्वन्यत्र कृत एव पूर्वम्। स युधिष्ठिरमेकदा जगाद--

'भवदाज्ञामृते किञ्चिन्न कार्यमिति निश्चितम्।' इति।

विप्रगोधनं संरक्ष्य प्रत्यागतोऽभिवाद्य सर्वान् गुरून्, तैः प्रतिनन्दितोऽभवद्धनञ्जयः। न कदाऽपि विजयेनावलिप्तोऽभवत् सः। प्रत्युत बभूव ततोऽप्यधिकभक्तिमान् गुरूणाममोघाशिषां विषये। ईश्वरभक्तिस्तस्य सर्वविलक्षणाऽऽसीत्। येन भगवान् भूतेशोऽपि सुप्रीतस्तस्मै प्रादाद्दिव्यां शक्तिम्। मातर्यपि तस्यात्यधिका भक्तिरादरः प्रेम चासन्। अनुसरति स्म स तस्या वचनमक्षरशः। पाण्डवेषु नवोढां याज्ञसेनीं गृहमानीय भिक्षेति साले निवेदितवत्सु समं विभज्य तां भुङ्ध्वमिति सा प्रत्युत्तरं ददौ। अन्ते च तद्वाक्यमतिलङ्घितुमनिच्छन्-

पाकशासनिः पाञ्चाली पञ्चानामपि धर्मतस्तेषां भार्याभवेदिति सुदृढ-मुवाच। मातुस्तु धनञ्जये बभूवाधिका प्रीतिः। कर्णार्जुनयो रूढमूलं वैरं दृष्ट्वाशनिप्रहतेव सा बभूव। यद्यर्जुनः कर्णः स्व-भ्रातेत्यज्ञास्यत् तर्हि भ्रातृप्रेमपूर्णहृदयस्तेन सह युद्धं नाकरिष्यदेव। पूज्यपूजाविषयेऽर्जुनस्य नामाचन्द्रार्कं स्मर्येत लोकैरित्यत्र नास्ति संशय-लेशोऽपि।

---

## ६. ॥ धर्मपरायणता ॥

'धारणाद्धर्म इत्याहुर्धर्मो धारयते प्रजाः' इति हि प्रोक्तं त्व ग्रन्थे। यदनुसरणाभावे लोको व्यवस्थाभ्रष्टो निमज्जेदपारक्लेशपङ्के। अस्य ग्रन्थस्य प्रधानविषयो धर्मकर्मबोधनरूप इति सर्वैरप्यभ्युपगम्यते। अर्जुनश्चास्मिन् कर्माणि साधकनया प्रयोजितः। यद्यत्कर्म सोऽन्व-तिष्ठत् तत् सर्वमपि धर्मपुरःसरमेवाभवत्। धर्मः परनयनमासीदित्यत एव तस्य धर्मपरायण इति नामाभूत्। बाल्यादेवाधर्मभीरुश्चचाल पदमेकमपि न धर्माध्वनः। असत्यममन्यत स महापातकम्। तेनैवोक्तं कस्मिंश्चिदवसरे--

'अनृतं नोक्तपूर्वं च मया किञ्चन कर्हिचित्।'

सम्भाषणेऽपि 'किमयं धर्मः' इत्यादिप्रश्नैः स्वधर्मानुरक्ततां स प्रदर्श्य धर्मात् प्रमाद्यन्तमन्यमपि धर्मरतं कर्तुमुत्सहते स्म। रुध्यमानो गङ्गा-तीरे गच्छंश्चित्रसेनेनार्जुनो वचनमाददे।

'असम्बाधा देवनदी सर्वेषां पावनी शुभा ।
कथमिच्छसि तां रोद्धुं नैष धर्मः सनातनः ॥' इति ।

विजित्य स्वयंवरे पाञ्चालीं निजबाहुवीर्येण पार्थः प्रणनाम मातरम् । विवाहमन्तरेण तयोक्तां वाचं मनसि निधाय, धर्मात्मजे कुन्तीं समाश्वास्य--

'त्वया जिता पाण्डव याज्ञसेनी त्वयैव तोषिष्यति राजपुत्री ।
प्रज्वाल्यतां हूयतां चैव वह्निर्गृहाण पाणिं विधिवत्त्वमस्याः ॥'

इति वदति, भूयिष्ठधर्मा फल्गुन उदारचेताः प्रतिजगाद भ्रातरम्--

'मा मां नरेन्द्र त्वमधर्मभाजं कृथा न धर्मो ह्ययमीप्सितोऽन्यैः ।
एवं गते यत् करणीयमत्र धर्म्यं यशस्यं कुरु तद्विचिन्त्य ॥
पाञ्चालराजस्य हि यत्प्रियं स्यात्
तत् ब्रूहि सर्वे स्म वशे स्थितास्ते ।' इति ।

जननीच्छातिक्रमपापभीरुः स सर्वथापि नान्वमन्यत याज्ञसेनीं स्वयमेवोद्वोढुम् । 'न मातुर्दैवतं परम्' इत्यभियुक्तोक्तिमनुसन्धाय तत्प्रीणनायैवायतत स सर्वदा । यतः प्रतीक्ष्यपादानामनुग्रहाभावे दुरन्तायतिरापतेदिति स जानाति स्म । नास्माभिरत्र विचारणीया तद्वचसो युक्तायुक्तता ।

ब्रह्मर्षिणा नारदेनोपदिष्टाः पञ्च भ्रातरः समयं खलु चक्रुः समबुद्ध्या --

'एकैकस्य गृहे कृष्णा वसेद्वर्षमकल्मषा ।
द्रौपद्या च समासीनमन्योन्यं यो विदर्शयेत् ।

स नो द्वादश वै मासान् व्रतचारी वने वसेत् ।' इति ।

ददर्श त्रिविक्रशाजिष्णुः कृष्णया सहितं युधिष्ठिरं प्रविष्टो गृहमायुधग्रहणाय । वनवासो ध्रुवं भविष्यतीति मत्वापि न स क्षत्रधर्मात्प्रच्यावितरक्षणकर्मणः । स्थाने कविकुलगुरुणा कालिदासेनोक्तम्---

'क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।' इति ।

गुडाकेशो वनवासाय मतिमकरोत् परिहारार्थमात्मकृतसमयोल्लङ्घनरूपस्य धर्मलोपस्य । तदा युधिष्ठिरः समयातिलङ्घनदोषो न तस्मिन् वर्तत इत्युक्त्वा तं निर्धारान्निवारयितुमयतत । सयुक्तिकं चैनमुवाच--

गुरोरनुप्रवेशेन नोपघातो यवीयसः ।
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकृत् ॥' इति ।

तदा धर्मरूढमतिर्मतं स्वकीयमुवाच पुरन्दरनन्दनः:--

'न व्याजेन चरेद्धर्ममिति मे भवतः श्रुतम् ।
न तस्माद्विचलिष्यामि सत्येनायुधमालभे ॥' इति ।

तदनु स्वीकृतब्रह्मचर्यदीक्षो धनञ्जयो विज्ञाप्य राजानं तदाशिषं चोपलभ्य वर्षमेकं व्रतेनातिवाहयितुं जगाम वनाय । तादृशपरिस्थितिःमापन्नः साधारणो जनस्तु भ्रातुर्युक्तिवचनं श्रुत्वा सुतरां सन्तुष्टो 'मनुष्याधीनो धर्मस्तद्विरोधं न कुर्यात्' इति समाधायात्मानं निरातङ्को गृहे वसेत् । अर्जुनस्तु न तथा । न केवलं वनवासं किन्तु प्राणत्यागमपि कर्तुं धर्मार्थमासीत् स सज्जः । ब्राह्मणैर्वेदपारगैः सार्धं चक्रे चक्रपाणिसखोऽग्निहोत्रं तपोऽभिषेकं च । ततो--

'रमणीयानि चित्राणि वनानि च सरांसि च ।
सरितः सागरांश्चैव देशानपि च भारत ॥
पुण्यान्यपि च तीर्थानि ददर्श भरतर्षभः ॥,

अनन्तरं च भृगुतीर्थवसिष्ठपर्वतागस्त्यवनेषु कृत्वाऽऽत्मनः शौचं प्राचीं दिशं प्रययौ कुर्वन् पावनमात्मानं दर्शनेन नैमिशारण्यस्य महानदीनां चोत्पलिनीनन्दापरनन्दाकौशिकीगयागङ्गाप्रमुखानाम् । यानि तीर्थान्यङ्गवङ्गकलिङ्गेषु तानि च स सर्वाणि ददर्श । तापसैरुपशोभितं महेन्द्रपर्वतं दृष्ट्वा च गोदावर्यां कावेर्यामपि सागरसङ्गमे स पितॄन् देवांश्च सम्पूजयामास । ततः केरलान् समतिक्रम्य गोकर्णमासाद्य गोपृष्ठासीनं महादेवमपूजयत् । अयमेवाशयो भङ्ग्यन्तरेण वर्णितश्चम्पूभारते--

'गोपृष्ठलग्नं कुरुशैलकन्यासहायमन्तः सततं दधानः ।
आश्चर्यमैक्षिष्ट स लोहिताक्षं गोकर्णवासं कुरुराजसूनुः ॥'

इत्थं किल्बिषपरिहारं कृत्वाऽऽत्मानं नव्यतेजोनिलयं पवित्रञ्च चकार शतमन्युतनयः ।

रजस्वलां पाञ्चालीं बाष्पगद्गदकण्ठीं केशेषु गृहीत्वा बलादाकर्षति नीचे दुःशासने मूकिमानं भजत्सु च कुरुवृद्धेषु क्रुद्धस्त्रैलोक्यसंहारसज्जपावकवर्चा मारुतात्मजो भ्रातरं वन्द्यमनुचितैरधिक्षेपगर्भैर्वचनैरवामन्यत---

'अहो निर्मानता नाम क्षान्तिरित्युच्यते बुधैः ।
पराभवेऽपि दाराणामुपेक्षां क्षमते नु कः ॥

त्रिधात्वा किं कृतो ज्येष्ठो निर्वैरस्त्वं युधिष्ठिर ।
यस्याहोंऽस्मि न तद्वाच्यं किमन्यद् गुरुगौरवात् ॥' इति ।

तादृशभ्रातृनिन्दापापकारिणं वृकोदरं धर्मबोधकैः शान्तैर्वचनैः फल्गुनोऽसान्त्वयत् । पितृसमो भ्राता कनीयसां न केवलमनिन्द्यः किन्तु पूजार्हश्चेत्येतदर्जुनो न कदापि व्यस्मरत् । पराजिता दासत्वमापन्नास्ते कथं नु शत्रूनुपालब्धुं शक्नुयुः । देशकालानुसारित्वं प्राज्ञस्य लक्षणम् । तत्तु भीमसेने नासीत् । अर्जुने तु सर्वदाऽविच्छिन्नं वसति स्म । अयमेव विशेषस्तं तनोति सर्वोत्कृष्टं लोकैकविशेषकं च ।

किरीटी मूर्तिमानवतार इव क्षत्रधर्मस्यासीत् । क्षत्रिया विप्र इव न कल्पिता निर्वेदमार्गानुसरणायेत्यपि तस्य निश्चितं मतमासीत् । क्षत्रिया आकालमवश्यं प्रजापरिपालनादिविश्वजनीनकर्मपरायणा भवेयुः । एतद्विरुद्धं य आचरन्ति ते धर्मभ्रष्टाः क्षत्रियवंशदूषका भवन्ति । स्वधर्मविषये युधिष्ठिरमपि सोऽर्जुनोऽसकृत्सूक्तिभिः क्रियावन्तं धर्मानुसारिणञ्चकार । युद्धान्ते युधिष्ठिरो बन्धुवधेन पर्याकुलितचेता ऋषिं नारदं बभाषे----

'भैक्ष्येण फलमूलैर्वा वृत्तयः सन्त्यवारिताः ।
तास्त्यक्त्वा कथमस्माभिर्घोरः सर्वक्षयः कृतः ॥

अर्जुनः पृथिवीं वीरो रक्षत्वस्मासु गौरवात् ।
त्यजाम्यायासविरसामेतां कुत्सितजीविकाम् ॥' इति ।

क्षत्रियानुचितं प्राप्तां श्रियं त्यक्तुकामस्य भ्रातुर्वचनमाकर्ण्य जातमन्यु-

धनञ्जयोऽब्रवीदूर्जिताशयं वचनम्----

'संन्यासो दीर्घसूत्राणामालस्यमभिधीयते ।
लज्जाकरमतो लोके किमन्यत्प्राज्ञगर्हितम् ॥
न कदाचिच्छ्रुतोऽस्माभिः किल भिक्षाशनो नृपः ।
क्रमप्राप्तामिमां लक्ष्मीं भ राजन्नविक्रियः ॥' इति ।

यज्ञतुरगानुसारी दिग्विजिगीषया स गच्छन् देशाद्देशमाययौ मणलूरपुरम् ।

'प्राप्तं प्रत्युद्ययौ राजा तत्पुत्रो बभ्रुवाहनः ।'

युद्धार्थी क्षत्रियनिकरकमलाकरभास्करः स्वपुत्र पि विनम्रं तदा क्षत्रधर्ममूढममन्यत । पितापि तस्मिन्नवसरे युद्धं धर्मविहितमासीद् बभ्रुवाहनस्य । एतादृशं पुत्रं क्षत्रियानुपपन्नवृत्तं कृताञ्जलिमालोक्य स निनिन्द----

'दृष्ट्वा मां सायुधं प्राप्तं साम्ना प्रत्युद्यतोऽसि किम् ।
धिक् त्वामक्षत्रियं भीरुमित्यूचे तं धनञ्जयः ॥'

अत्रान्तरे वामोरूश्चित्राङ्गदा फल्गुनप्रियाऽऽगत्य सुतमेवं जगाद----

'युद्धेन तुष्यति पिता तवायं सुभटप्रियः ।
वीरसन्तानसफला शौर्यश्रीरभिमानिनाम् ॥'

तदनु पुत्रशरविद्धो विजयः 'पुत्रादिच्छेत्पराजयम्' इति सूक्तिमनुरुध्यानन्दनिर्भरो भूत्वा तस्य विक्रमं साधु प्रशशंस । पुत्रः खलु स लोकैकवीरस्य महात्मनः । विदन्ति विद्वांसस्ततः परं यदत्र समभवत्

मत्स्यसुतः कौरवसेनां विलोक्य कोदण्डरवप्रचण्डां केसरिणं हरिण इव भीतोऽर्जुनमुपात्तबृहन्नलाभिधानं प्रायतत निवर्तयितुं युद्ध-

साहसात्। श्रुत्वाऽर्जुनो भीरोस्तस्याततिरामवगीतं दीनं वचनं तत्कत्थनशीलतां निर्लज्जतां दैन्यञ्च धिक्चकार।

'यशो हि कल्पान्तशतैकसाक्षि न जीवितं कुञ्जरकर्णलोलम्।
तथा प्रतिज्ञां स्वसुरुत्तराया मातुश्च कृत्वा पुरतो विलज्जः॥
पलायनोत्साहपरः स्थितोऽसि ह्रीमानचिन्ता न हि कातराणाम्।'

इति।

ऋजुस्वभावः सत्यसन्धता परत्राणदीक्षा क्षत्रियत्वाभिमान इत्यादयो बहवो गुणा धार्मिकस्यास्य रत्नानीव सागरस्य परां शोभमावहन्ति स्म। 'अर्जुनस्य प्रतिज्ञे द्वे न दैन्यं न पलायन'मिति च मनस्विनस्तस्य लोकातिशायि निसर्गोज्ज्वलं तेजः प्रकाशयति। वेदाध्ययनतपश्चर्यादिकं केवलं धर्म इति न व्यवह्रियते। किन्तु स्वस्वसहजकर्मण्यभिरतत्वमेव समानो धर्मः सर्ववर्णानामित्यामनन्ति श्रुतिस्मृतिविदः।

---

## ७. ॥ सांयुगीनता ॥

अन्यत्र प्रस्तुतमात्रं विप्रवेषधारिणां पाण्डवानां तथा द्रौपद्यां विप्रेण हस्तेकृतायां सञ्जातभयानकरोषाणां दुर्योधनादीनां राज्ञामायोधनमत्र सविस्तरं विशदीक्रियते। अवलोक्य राजशार्दूलान् क्रुद्धान् गृहीतशरान्, सन्त्रस्ते द्रुपदे शरणं गते विप्रान्, शत्रुमर्दनो महावीर्यो धनञ्जयो भीमसेनेन सहोद्ययौ युद्धाय। भ्रातरि च घोरं रूपं प्राप्य कुर्वति सिंहनादं जिष्णुस्तावदेवमुवाच----

"मा घोरतां दर्शय शत्रुमध्ये साधारणं योधय तावदार्य ।"
ततः शुल्कावाप्त महारथो धनुरादाय कर्णमताडयत् त्रिभिः शरैः । वीरयोस्तयोस्तदाऽतिभीमं कोदण्डज्यानिर्घोषबधिरितदिक्तटमुत्पतद्रजः-पुञ्जसञ्जातनूतनभूखण्डनभोमण्डलं तुमुलं युद्धमभूत् । अर्जुनप्रयुक्तान् बाणान् प्रतिहत्योच्चैर्ननाद राधेयः । प्रशशंस च विप्रवेषस्य तस्य बाहुवीर्यम् । तथा हि----

'किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम ।
अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः ।
आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रितः ।
विप्ररूपं विधायेदं ततो मां प्रतियुध्यसे ॥'

अर्जुनस्तु तत्सर्वमपि निषिध्य,

ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्वशस्त्रभृतां वरः ।
ब्राह्मे चास्त्रे च वेदे च निष्ठितो गुरुशासनात् ।
नत्वा संयोजये विप्रो न मे जीवन्विमोक्ष्यसे ।
निर्जितोऽस्मीति वा ब्रूहि ततो व्रज यथासुखम् ॥"

इत्येतदुक्त्वा तस्य धनुर्ज्यामच्छिनत् ।

ततः कर्णविनाशाय सन्दधे शरमर्जुनः ।
जितोऽस्मीत्यब्रवीत् कर्णः सञ्जहार ततोऽर्जुनः ।"

अमेयपराक्रमं 'गुरोः समक्षं यावत्ते हराम्यद्य शिरः शरैः' इत्यस्त्रशिक्षा-परीक्षावसरे तर्जितवन्तं राधेयमपि जितवतोऽर्जुनस्य पश्यत युद्धविद्या-चातुर्यं देवानामपि विस्मयकारिणीं च प्रतापसम्पदम् ।

राजसूये कृतमतिर्धर्मसूनुरर्जुनं प्राहिणोदुत्तरान्कुरून् प्रति प्रत्याहरणाय करस्य विजित्य महाबलान्नृपतीन्। प्राग्ज्योतिषपुरे दिवसानष्टौ भगदत्तेन भीमं सङ्गरं कृत्वाऽऽददे भूरि द्रविणं तस्मात्। एवं बाह्लीककम्बोजकाश्मीरान्विजित्याकुप्यं वसु हयांश्च वातरंहसः प्राप्यागादुत्तरान् कुरून्। तत्र मनुष्याणामगम्ये देशे पराजिताः स्वयमेव राजानो ददुर्धर्मराजस्य यागार्थं प्रभूतं काञ्चनं रत्नानि च।

विराटपुरीमुत्तरेण ससैन्ये दुर्योधने तद्गोधनमपहृत्यापयाति गाण्डीवधन्वा शवप्रच्छन्नं स्वगाण्डीवचापमानाय्य दीनवाचमुत्तरं सान्त्वयामास। तथा हि—

"पार्थोऽर्जुनो जिष्णुरहं किरीटी धनञ्जयः श्वेतहयश्च कृष्णः।
भजस्व धैर्यं कुरुराजसेनां पश्यास्त्रजालैर्मम दीर्यमाणाम्॥
अज्ञातवासः पणनिर्मितोऽसौ तीर्णोऽभवद्वेऽद्यनि नः सुखेन।"

तत आध्माय शङ्खमखण्डकीर्तिरखण्डलिः धुतचापदण्ड आचकर्ष कार्मुकम्। तज्ज्यास्फालनोत्थगभीरघोषेणाकम्पमाने भुवने, द्रोणः कपिलवर्णेन रथेन योद्धुमागतमर्जुनं निवेद्य सुयोधनाय, शिथिलाशोऽभूत् कौरवसेनाविजये। अभिधावत्यर्जुने सुयोधनं भीष्मप्रमुखास्तं पर्यवारयन्। निर्यातासु मत्स्यपुरं जवेनोत्पुच्छासु गाण्डीवज्याघोषत्रस्तासु गोषु, प्राहिणोत्सव्यसाची मृत्युदूतीमनवच्छिन्नां शरावलीम्। तेऽपि प्राक्षिपन् सुयोधनादयो निशितान् शिलीमुखानर्जुने। अथ क्रोधोद्दीप्तमुखशातकुम्भकमलो वीरो दिव्यैरस्त्रैश्चिच्छेद शिरांसि महीभुजाम्।

तद्बाणाहता निपेतुर्बहवो द्विरदा हयाश्च रुधिरावर्ते । ततो विजय-द्विगुणीकृतसत्त्वो विजयश्चकर्त कर्णभ्रातुरुत्तमाङ्गम् । मृतमनुजं वीक्ष्य राधेयस्तूर्णमाकीर्णसायकः पार्थमपूरयच्छरावलिभिः । पाकशासनिस्तु झटिति व्यदारयद्गाण्डीवप्रहितैः सायकैरङ्गनृपतेरङ्गानि । क्षतजोक्षितः कर्णो दम्भोलिभिन्नशिखरो धातुस्रावी भूधर इव भूत्वाऽन्यतो ययौ । पुनरप्येकीभूतान्महारथान् प्रत्ययुध्यत वीरो विभज्यात्मानमिव बहुधा । ततश्च समधत्त नृपेषु सम्मोहनं नामास्त्रम् । तदा हि--

"अकर्णतालद्विरदा निश्चलाङ्गतुरङ्गमा ।
सा तेन मोहितास्त्रेण लिखितेवाभवच्चमूः ॥"

एवमेव सर्वाञ्छस्त्रधारिणो भीष्मद्रोणप्रमुखान् स्वभुजबलेनास्त्रप्रयोग-नैपुण्येन च विद्राव्य, सुरैर्हृष्टरोमभिः पुष्पवृष्ट्यादिभिरर्चितः किरीटी विराटनगरं प्रति न्यवर्तत ।

समारब्धेऽनेकसहस्रजीविसंक्षये महाभारतघोरसमरे, भ्रात्रा पृष्टोऽर्जुनः स्वपक्षस्यावश्यम्भाविनं विजयं जगाद । तथा हि---

"योद्धाऽहं सारथिः कृष्णो गाण्डीवं धनुरूर्जितम् ।
अस्त्रं पाशुपतं घोरं प्रियं देवस्य धूर्जटेः ॥
आस्था का तत्र मर्त्येषु यत्रैतत्तुल्यमुद्यतम् ।"

सप्ताक्षौहिणीपरिमितपाण्डवसेनायास्तथैकादशाक्षौहिणीपूर्णकौरववरूथि-न्याश्च धर्मक्षेत्रे कुरुक्षेत्रे महद्युद्धं प्रावर्तत । निःशङ्कमाचकर्ष शत्रु-मर्दनोद्युक्तः कृष्णोपदेशसञ्जाताभिनवोत्साहो धनञ्जयो गाण्डीवम् ।

अन्योन्यमयुध्यन्तोभयपक्षास्थिताः सर्वे नृपालाः । कुरुवृद्धेनामोघौजसा भीष्मेण पाण्डवसेनासु बहुशो विदारितासु धनञ्जयसूनुर्युवा वीरोऽभिमन्युर्त्रिशिखैस्तस्य चकर्त ध्वजम् । संरब्धो वृद्धपितामहः पाण्डवचमूं विगाह्य जघान योधाननेकान् । द्वितीये युद्धदिवसे कुरुवीरैः परिवृतं सुतं विलोक्य धनञ्जयो मण्डलीकृतगाण्डीवस्तूर्णं परानभ्युधयौ । चित्रयोधिनस्तस्य सायका बहूनां शूराणां जहुः शिरांसि महीरुहां फलानीव । आखण्डलभुवा गाण्डीवप्रेरितैः शरैरनीकेषु विदारितेषु सायं गगनं तद्रुधिरेणेव रक्तवर्णमभात् । अपरेद्युरपि भीष्मेण प्रलयाग्निनेव दहदस्त्रजालैः सन्तापितेषु सैन्येषु वासुदेवः फल्गुनरथं तदन्तिकमनैषीत् । तदा भीष्मशरपरिवृतो धनञ्जयो बभूव चारुकाञ्चनपञ्जरः पञ्चानन इव । विचित्रक्रमेण युध्यमानस्य तस्य वीक्ष्य पराक्रमं पितामहः 'साधु पुत्र साधु' इति संहृष्टस्तं प्रशशंस ।

'ततो निरन्तरैर्बाणैर्भीष्मकार्मुकनिर्गतैः ।
आक्रान्तभुवनाभोगैर्नादृश्यन्त दिशो दश ॥"

पाण्डवः सपदि तदायुधमहावृष्टिं छित्वा सन्दधे सर्वलोकक्षयक्षमं माहेन्द्रमस्त्रम् । चकम्पे तेन प्रचण्डमारुतेनेव कुरुवाहिनी । अष्टमे दिवसे धनञ्जयसूनुरिरावान् घनयोधी शकुनितनयान्निहत्यालम्बुसं राक्षसं चिच्छेद खड्गेन । स तु मायावी गारुडं रूपमास्थाय जहारेरावाच्छिरः । शतमन्युजः सुतं निहतं श्रुत्वा महता क्रोधेन भूमिपालानां शिरोभिर्दिव्यास्त्रखण्डितैर्व्यधाद्दुर्गमां वसुधाम् । अन्यस्मिन्नहनि विदधे स जगत्क्षोभं वायव्यास्त्रेणाभ्येत्य महास्त्रग्रामुदुःसहं

द्रोणम्। केशवस्तु च्छिन्नवर्मरथध्वजे भीष्मेण पाण्डवबले विदीर्णे सति तं जहीत्यादिदेशार्जुनम्। पितामहशराहतो वीरः कुरुकाननमपूरयदाशुगैः। ततो रक्षति स्म च पृष्ठतस्तिष्ठन् क्रुद्धं शिखण्डिनं शरवर्षैर्भीष्ममापूरयन्तं प्रतिज्ञाततद्वधं फल्गुनः। भीष्मोऽपि पार्षतमनादृत्य कृष्णार्जुनावताडयत् सायकैः। सत्वरं पुरतः स्थिते तयोः शिखण्डिनि स सञ्जहार निजास्त्रम्। विसृष्टास्त्रं पितामहमर्जुनस्तीक्ष्णैर्बाणैरताडयत्। तदा भीष्मो 'नैते शिखण्डिनो बाणाः किन्तु धनञ्जयस्यैव। ये बिलं विषधरा इव प्रविशन्ति मच्छरीर'मित्युक्त्वा प्राहिणोच्छक्तिं पाण्डुतनयाय। ताञ्च च्छित्वा त्रिधा शरैरर्जुनस्तमलक्ष्यं चकार। एतां दशामापन्नो वृद्धपितामहो महसां निधिरपर इव पपात रथाद्भूमौ। शरतल्पगतस्य तस्यार्जुनस्तदाज्ञया पुनस्त्रिभिरिषुभिरकल्पयदुपधानम्। रजन्यां चातितरां तृष्णया पीडितं तं धनञ्जयः पर्जन्यास्त्रेण जलमानाय्यापाययत्। प्रीतात्मा पितामहः किरीटिनो विक्रममनुपमं शश्लाघे।

पतिते तु भीष्मे द्रोणः सेनानायकत्वेऽभिषिक्तो वैनतेयव्यूहं निर्माय वीरभटान् बहून् प्राहिणोत् कृतान्तपत्तनम्। अर्जुनोऽप्यवधीद्गाण्डीवविसृष्टैः शरैः संशप्तकान् प्राग्ज्योतिषेश्वरं भगदत्तं च। युध्यमानेऽन्यत्र तस्मिन् तत्सुतो महावीरोऽभिमन्युर्द्रोणविरचितं चक्रव्यूहं प्रविश्यासंख्यान् राज्ञो व्यापाद्यान्ते जयद्रथादिभिः सशस्त्रैरशस्त्रोऽहन्यत। अतिप्रियं पुत्रं वञ्चकैर्नृशंसै राजभिर्निहतं श्रुत्वा शोकदहनक्वाथ्यमानहृदयो धनञ्जयो मोहात् स्थाणुरिवाभवत्। लब्धसंज्ञश्च

दुःखविह्वलो शुशोच मृतमात्मजम्। को नु खलु जगतीतले तादृशं महावीरं पुत्रमानन्दनिर्भरेण नयनयुगलेनानिशं वीक्षमाणः तदतर्कित-निधनेन स्फुटितहृदयो न भवेत्। क्रोधान्धः स दृढां प्रतिज्ञां चकार क्रूरजयद्रथमारणे। तथा हि--

'हन्ताहं सैन्धवं पापं त्रिदशैरपि रक्षितम्।
अनस्तगे तिग्मकरे पश्यतां सर्वभूभुजाम्।
आचरन्ति निषिद्धं ये चरितञ्च त्यजन्ति ये॥
लोकान् व्रजेयं तत्तुल्यान् हन्यां यदि न तं युधि॥'

अन्येद्युः कृतदृढप्रतिज्ञः श्वेताश्वो राजमण्डलं निविडं प्रविश्य हत्वा च भूरिश्रवःप्रमुखान्वीरानस्तंगन्तुमिच्छति भगवति भास्करे सर्वैर्महारथैर्गुप्तं ददर्श सैन्धवम्। दूरादेव कोपारुणया दृशाऽऽकर्णाञ्चितगाण्डीवो महारथस्तमदहदिव। क्षणादेव सिन्धुराजो हतो हत इति कोलाहलो दिक्तटमपूरयत्। वासुदेवादेशेन स निकृत्तं तस्य शिरः पातयामास दिव्यास्त्रेण तपसि स्थितस्य तत्पितुरङ्के।

हते धृष्टद्युम्नेन गुरौ द्रोणे सुयोधनेनाभ्यषिच्यताङ्गराजः, यस्य सर्वोऽपि यत्नो विचारश्च धनञ्जयमारणायैवासीत्। प्रार्थितोऽपि मात्रा कुन्त्या योऽर्जुनवधोत्कण्ठां नात्यजत्। प्रभाते सन्नद्धे बलद्वये सन्निकृष्टे कर्णः पाण्डवचमूं विलोक्य कत्थमानो दुर्योधनमूचे। तथा हि--

'अद्य गाण्डीवधन्वानं हत्वा सारं भवद्द्विषाम्।
सफलं ते करोम्येष सङ्कल्पं चिरसम्भृतम्॥'

कर्णोऽतिदृप्त आस्फालयन् मौर्वीं सारथिं शल्यमर्जुनवधः सुखसाध्य आत्मनेत्यादि वदन् बहु प्रजगल्भे। तच्छ्रुत्वा शल्यो धनञ्जयस्य सर्वातिशायिपराक्रममतिमानुषं तेजश्च सोदाहरणं प्रतिपाद्य कर्णस्य गर्वं खर्वं चकार। शराघातैश्छिन्नवर्माणं विद्राव्य युधिष्ठिरं कर्णः पाण्डव-सैन्येषु काललीलां व्यधात्। अत्रान्तरेऽस्त्रवर्षिणा द्रौणिना सुदीर्घरणं कृत्वा प्रतिनिवृत्तोऽर्जुनश्चक्रिनियमितं रथं भीमसेनान्तिकमानाययत्। श्रुत्वा च कर्णशरक्षतं युधिष्ठिरं शिबिरे शयानं तमुपजगाम। कर्णं हत्वा प्रतिनिवर्ततेऽर्जुन इति मत्वा तामेव वार्तां तं पृच्छति युधिष्ठिरे किरीटी द्रौणिप्रमुखानभियुध्यमानस्य स्वस्य कर्णवधाय नावसरो लब्ध इत्युत्तरं ददौ। अनेन संक्रुद्धो निर्भिन्नगात्रो युधिष्ठिरो भ्रातरं विविधै-र्विप्रलापैरुपालभत। तदाकर्ण्य मर्मणीव समाहतो विजयः साश्रुलवां स्वकृपाणे ददौ दृष्टिम्। तदाशयं विज्ञाय धर्मानिलयो वासुदेवो धर्म्यवचोभिः समाश्वास्य तं भ्रातृहत्याऽऽत्मघाताभ्यां न्यवारयत्। तदनन्तरं किरीटी विगर्ह्यात्मनः कोपान्धतां चरणयोः पपाताग्रजन्मनः। केवलमत्रैवावसरे स क्रोधमूर्च्छितो भ्रातरमवामन्यत। मानुषतामनु-स्मरन्तस्तस्य विद्वांसस्तं प्रथमापराधं क्षमेरन्। कर्णवधमात्रे स्थिरोद्योगेऽपि तस्मिन् भ्रातुरनुचितं वचनमभिमानखण्डनमभूत्। तीर्णेऽस्मिन् शोच-नीयवृत्ते विजयो नव्योत्साहपूरितः शत्रुसेनां कबन्धमयीमिवातनोत् क्षणेन। हते दुश्शासने भीमसेनेन चित्रयोधिनः पाण्डवचमूमर्दिनो वृषसेनस्य शिरश्चिच्छेद नमुचिसूदनसूनुः। एतद् दृष्ट्वा भ्रुकुटी-धूमकेतुनाऽमर्षाज्यपुष्टेन क्रोधाग्निना दह्यमानो राधेयोऽभ्यधावद्धनञ्जयम्।

तयोस्तुमुलं सङ्गरं द्रष्टुं कुतूहलिनो दिवौकसोऽपि नभस्थलमलंचक्रुः। पार्थध्वजेनाभिहतश्चकम्पे कर्णकेतुः। तद्रथरक्षिणां च शिरांसि कपिध्वजो निचकर्त निशितैः शरैः। ततः सर्वाण्यपि विजयप्रयुक्तान्यस्त्राणि भार्गवास्त्रेण खण्डयित्वा कर्णो भीमार्जुनौ कृष्णं चाताडयत्। उभयोरपि सेनयोः क्षयो विपुलः समजनि तयोर्वीरयोस्तीव्रप्रहरणैः। अथ महाघोरं सर्पास्त्रं कर्णेनार्जुनकण्ठं लक्ष्यीकृत्य प्रयुक्तं निशाम्य हरिः स्ववपुर्मन्दराद्रिभारं चकार। येन हयचतुष्टये जानुभिः वसुधां स्पृशति फणी जग्राह नम्रस्य किरीटाग्रं किरीटिनः। तदप्यस्त्रं छित्वा पुनरपि विजयो विजिगीषुर्ब्राह्मं शाक्रं चास्त्रं प्रायुंक्त। राधेयस्तु ते खण्डयित्वा अर्जुनस्य चिच्छेद मौर्वीम्। अत्रान्तरे दिष्टया कर्णस्य रथाङ्गं भूमौ सक्तमभवत्। 'मुहूर्तं क्षमतां भवानि'ति तदोक्तवन्तं कर्णं कृष्णो द्रौपदीवस्त्रापहरणविषवह्निप्रदानादिपापकर्मसु तद्भागितां स्मारयित्वा 'आर्जवं हि कुटिलेषु न नीति'रित्यर्थबोधकं वाक्यं व्याजहार। सत्वरं किरीटी काञ्चनभूषितं शरमभिमन्त्र्यास्त्रगुरून् रुद्रादींश्च स्मारंस्मारं तमसृजत्। क्षणेन तेन कण्ठे निर्भिन्नो राधेयः क्रकचोत्कृत्तहेमताल इवाधः पपात। इत्थमसदृशपराक्रमं राधेयमपि समरे सञ्जघान घनवाहनसूनुः। एवं बहुवारं दिग्विजययात्रायां सङ्गरे च सर्वान् सपत्नान् जित्वाऽप्रधृष्योऽर्जुनो भुवने नभसि कठोरकिरण इवैकवीरः सुतरां रराजे। अर्थवच्चाभवत्तस्य नाम लोकैकवीरस्य विजय इति प्रसिद्धम्।

---

## ८. ॥ कामिनीप्रेम ॥

सुभगो महेन्द्रसूनुः कन्दर्पनिभेन रूपेण कामिनीमोहनकेन न केवलं प्रमदानां मनांसि जहार, अपि तु स्वयमेवातिसुन्दराणि कमलकोमलानि वीक्ष्य सुदतीनां शालीनताप्रसाधनद्विगुणितनैसर्गिकमधुराकृतिलावण्यानां मुखानि भवति स्म मनसिजविशिखविद्धः। ललितकलासु विहारेषु च तस्य महदासीत् प्रेम। स्वललितकलाज्ञानेन स उत्तरां नाट्यादिकलासु सुशिक्षितां चकार। कामिनीभिः सह जलक्रीडामुद्यानविहारं च कर्तुमस्य महानुत्साहः। नावधार्यमनेन धनञ्जयो विषयलम्पटः कामुक आसीदिति। क्षत्रियवीरस्य शृङ्गारासक्तिश्च नानुपपन्नेति वदन्ति तत्त्वविदः।

तीर्थयात्राप्रसङ्गे नागकन्यामुलूपीं पाणौकृत्य तनयमप्युत्पाद्य तस्याम् अटंस्तीर्थात्तीर्थमवाप मणलूरपुरं त्रयोदशे मासे। अभ्यगच्छच्च महीपतिं सर्वधर्मवेदितारं सर्वास्त्रज्ञमकल्मषं चित्रवाहनम्।

"तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना।
तां ददर्श पुरे तस्मिन् विचरन्तीं यदृच्छया॥"

मत्तकाशिनीं सहस्रपत्रपत्त्रायतलोचनां स्तिमितेन चक्षुषा निर्वर्ण्य सञ्जातमदनव्यथश्चकमे ताम्। निवेदयामास च राज्ञे स्वमनसोऽभिलाषम्। अथ तेन दत्तां तां परिणीय कलहंसगामिन्यां चित्राङ्गदायां जनयामास कुमारं सुकुमारम्।

अनन्तरं चित्राङ्गदां 'भद्रे, मा कृथाः सन्तापं विप्रयोगेण, बहिश्चरा मे प्राणा बभ्रुवाहनः। एनं वर्धय बुद्धिमन्तम्। आगमिष्यसि च राजसूयं खाण्डवप्रस्थे सार्धं पित्रा सुतेन' इत्यादिमधुरवचनैः समाश्वास्य ययौ तीर्थानि द्रष्टुम्।

प्रभासतीर्थं प्राप्य गदेनोक्तां सुभद्राकथां स्मरन् रात्रौ धनञ्जयश्चिन्तयामास तां वरवर्णिनीं माधुर्यरूपसम्पदा विराजमानां प्राप्तुं को नामोपायो भवेदिति।

"येन केनाप्युपायेन प्रविश्य च गृहं महत्।
दृष्ट्वा सुभद्रां कृष्णस्य भगिनीमेकसुन्दरीम्॥
वासुदेवमतं ज्ञात्वा करिष्यामि हितं शुभम्।"

इति मनसिकृत्य पार्थस्त्रिदण्डी मुण्डितः कुण्डी साक्षमालाङ्गुलीयको योगपट्टधरश्च भूत्वा परिव्राजकवेषेण भ्रमन्नितस्ततो भैक्षं चचाराज्ञात एव कुकुरान्धकवृष्णीनाम्। दिव्यज्ञानेनार्जुनमतमवगच्छन् वासुदेवः प्रभासमभ्येत्य तेन सह रैवतकं जगाम गिरिम्। समुज्जृम्भितमहोत्सवे तस्मिन् गिरौ निवसन्तं तं कृष्णः पुनराजगाम स्त्रीभिः परिवृतः। तदा सखीमध्ये स्थितामलंकृतां चारुदर्शनामद्राक्षीत् पाकशासननिर्मूर्तिमतीमिव स्वहृदयेच्छां सुभद्राम्। सज्जः कन्दर्पोऽपि सममेव तं विशिखैरताडयत्। स्वभगिनीं दर्शयन्तं कृष्णमर्जुनस्तस्या मानुषदुर्लभं रूपं संश्लाघ्य तत्प्राप्त्युपायमपृच्छत्।

कन्यायाः प्रसह्य हरणं क्षत्रियस्य प्रशस्यते। अतः कालं प्रतीक्ष्य यतिरूपधरेण त्वया भगिनी प्रसह्य परिणीयतामिति चक्रपाणि-

रुवाच मध्यमपाण्डवम् । प्रतिनिर्वृत्तेषु पौरेषु द्वारकां, धनञ्जयस्तामेव सुस्तनीं चिन्तयन् मनोज्ञे गिरावत्रतिष्ठते स्म । बलदेवः कन्यापुरे सुभद्रायास्तस्य वासभोजनाद्यर्थं कारयामास सज्जं सर्वमपि । न्ययुंक्त च तां वामलोचनां तच्छुश्रूषायाम् । कञ्चित्कालमनैषीत्पाकशासनिरेवं सुखेन सेव्यमानो मुग्धया सुभद्रया । कथाश्रवणेनैव तस्मिन् बद्धानुरागेयं भामिनी यथाश्रुतं रूपमर्जुनस्य समक्षं समीक्ष्यैकदा रहस्येनमेवमभाषत---

'क्व नु पार्थश्चरत्यद्य बहीर्दुर्वसतीर्वसन् ।
सुखोचितो ह्यदुःखार्हो दीर्घबाहुररिन्दमः ॥
कच्चिच्छ्रुतो वा दृष्टो वा पार्थो भगवतार्जुनः '।

तथा पृष्टस्तया स सुप्रीतचेता भूत्वा धनञ्जयोऽहमिति तां प्रत्युवाच । तौ परस्परानुरागं प्रदर्श्य विवाहदिवसं प्रतीक्षेते स्म । कृष्णस्तु पूरयितुकामस्तयोरभिलाषं प्राहिणोत् सर्वान् पौरान् बलदेवादींश्चान्तर्द्वीपमुमाकान्तस्य पूजार्थम् । प्रचलति च चतुस्त्रिंशदहोरात्रं महोत्सवे महादेवस्य, कामवशङ्गतोऽर्जुनो गान्धर्वेण विवाहेन तया सञ्जिगमिषुः सस्मार स्वपितरं शचीपतिम् । तस्य गान्धर्वविवाहमन्तरेण वचनं श्रुत्वा बाष्पदूषितलोचना सा सुकेशी चिन्तयामास जनार्दनम् । देवर्षिभिः समेतः पुरन्दरः पितृभ्यां सहितो वासुदेवश्च शीघ्रं समागत्य द्वारकां शास्त्रतः कारयामासतुर्विवाहं शक्रसूनोः । यादवस्त्रियः शची चारुन्धतीप्रमुखैर्दिव्यस्त्रीजनैः परिवृताः सुप्रसाधितस्य किरीटिनश्चक्रुर्वैवाहिकं मङ्गलम् । तदनन्तरं स द्वाविंशतिं दिनानि तत्र प्रियया

सह सुखमुषित्वा कृष्णादेशेन तदश्वं प्रियसारथिमारुह्य प्रतस्थे स्वपुराय। तेन सह रथे स्थितामभीशुहस्तां सुभद्रामूचुरभिनन्दन्त्यः कन्यापुरस्त्रियः—

'सर्वसीमन्तिनीनां त्वं श्रेष्ठा कृष्णसहोदरे।
यस्मात्सर्वमनुष्याणां श्रेष्ठो भर्ता तवार्जुनः॥'

एतयोः सुभद्रार्जुनयोः सुश्लाघ्यसत्त्वयोः सङ्गमादुदितो महावीर्यपराक्रमोऽभिमन्युस्तीक्ष्णतेजा इव भविता। अर्जुनः कामिनीप्रेमगावमित्थं भूत्वा गृहस्थाश्रमे यत्सुखमुपलभ्यते तत्समस्तं निष्प्रत्यूहमन्वभूत्।



## ९. ॥ मित्रस्नेहः ॥

महाभारते तावत् कृष्णार्जुनयोः समुपलभ्यते प्रथमः समागमो द्रौपदीस्वयंवरमहे। अर्जुनस्य वासुदेवेऽपारं प्रेमासीन्निसर्गतः। 'समानशीलव्यसनेषु सख्य'मिति खलु वदन्ति महाकवयः। तावुभावपि संयुक्तौ सञ्चरतः स्म बहुशः। उभावपि विहारप्रियौ कान्तासहवासैषिणावास्ताम्। एकदा नरवीरो बलारातिनन्दनः कृष्णं जलक्रीडामन्तरेण समभाणीत्—

'उष्णानि कृष्ण वर्तन्ते गच्छाव यमुनां प्रति।
सुहृज्जनवृतौ तत्र विहृत्य मधुसूदन॥
सायाह्ने विनिवर्तावो रोचतां ते जनार्दन।' इति।

विहारलोलुपो मधुसूदनः शीघ्रं तद्वचनमनुमन्वानः सर्वान् सुहृज्जना-

नामन्त्रयामास । वीरौ तौ खाण्डवप्रस्थकाननेषु विहरन्तौ बन्धुभिः स्त्रीभिश्च सार्धं भक्ष्यभोज्यानि यथेष्टमभ्यवाहरताम् । ततः—

'वने काश्चिज्जले काश्चित् काश्चिद्वेश्मसु चाङ्गनाः ।
यथादेशं यथाप्रीति चिक्रीडुः कृष्णपार्थयोः ॥'

मृदुहासानां ललनानां नर्तनं दृष्ट्वा तौ सुमनोहरमुद्देशं कञ्चिद्गत्वा पूर्वव्यतीतानि बहूनि विषयजातानि कथयन्तौ भृशं रेमाते । महेन्द्रेण युद्धमपि तौ सहितावेवाकुरुताम् ।

प्रभासतीर्थे वर्तमानमर्जुनं कृष्णः समुपेत्य पप्रच्छ हितम् ।

अपि च—

'तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं पथि ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥'

रैवतके च पर्वते तौ वादित्राणि शृण्वन्तौ गीतान्यनुमोदमानौ नृत्यं च पश्यन्तौ संमिलितजनानां यथाकामं विजह्रतुः ।

प्रियमित्रमर्जुनं गीतोपदेशेन भगवान् धर्ममार्गमानिनाय । सुहृच्छ्रेष्ठ एव हि युक्तमुपदिशति । अर्जुनः 'हे कृष्ण, हे यादव, हे सखे' इति वाक्येन कृष्णे स्वदृढप्रेम प्रदर्शितवान् । युद्धारम्भे च स यादवचमूं त्यक्त्वा माधवमेव सारथिं वव्रे । सुहृन्मणेस्तस्य साहाय्यकमेकं स सर्वोत्कृष्टममन्यत । भीष्मेण कृतेऽतिदारुणे कर्मणि पाण्डवसेनायां, क्रुद्धो वासुदेवश्चक्रायुधो रथादवतीर्य द्विषस्तच्छिरश्छेत्तुमकामयत । सुहृत्प्रतिज्ञाभङ्गं निवारयितुकामोऽर्जुनः शीघ्रं तमुत्पतन्तं प्रणामैः सप्रश्रयवचोभिश्च सान्त्वयित्वा पुनरप्यानिनाय तं रथम् । वासुदेवोऽपि

जयद्रथपितृवृत्तं चौत्तरायिकं कालेऽर्जुनायाकथयत् ।

अस्तं गते द्वारकानाथे भूतदयावति पार्थः शुशोच सुतराम् । क्षणेन कृत्स्नमिदं जगच्छून्यमिवान्धकारमयमिव विषपूर्णमिव निर्व्यवस्थमिव कालग्रस्तमिवास्तमितधर्ममिव च तस्याभूत् । स तथापि शनैर्धैर्यमास्थाय वृद्धौ तत्पितरौ समाश्वास्य योषितस्तत्रत्या आनिनाय हस्तिनापुरम् ।

साक्षान्नारायणो नराख्यस्तस्य मित्रं पुराणो मुनिश्चैतौ लोकशासनाय भुवमागतौ कृष्णार्जुनरूपेणेति बहुत्र वर्णितं दृश्यते श्रीमन्महाभारते । अतस्तयोर्नैसर्गिकी मैत्री जगति च तावनुवर्तमाना बोधयति लोकान् सुहृत्प्रेम्णोऽपारं महत्त्वं प्रयोजनं च ।

---

## १०. ॥ तात्कालिकमनश्चाञ्चल्यम् अथवा धर्मोपदेशः ॥

संस्थापितासु सागरतरङ्गोपमासु महायुद्धार्थं महासेनासु द्वयोरपि पक्षयोः, शत्रुबले गुरून् पितॄन्, भ्रातॄंश्च पश्यन्नर्जुनः कुलक्षयदोषमाशङ्कमानः क्षत्रधर्ममुपेक्षमाणो भिक्षाटनमपि वरं मत्वा, शोकसन्तप्तहृदयो गाण्डीवं विसृज्य 'न योत्स्य' इत्युक्त्वा रथोपस्थ उपाविशत् । एवं धर्मात्प्रच्यावन्तं तं भगवान् गीतारूपेणोपदिदेश कर्मयोगतत्त्वं क्षत्रधर्मम् । मन्यन्ते हि ज्ञानिनो भगवद्गीतामतिश्रेष्ठामस्मिन्नितिहासग्रन्थे । सर्वधर्मरहस्यमुपदेष्टुं वा ग्रहीतुं वा युद्धक्षेत्रे तौ विना भुवि न कोऽपि प्रभवेत् । अनेनार्जुनस्यासाधरणं सत्त्वं व्यक्तं भवति । 'शिष्यस्तेऽहं

शाधि मां त्वां प्रपन्न'मित्युक्तवन्तं सप्रश्रयं धर्मविवेकमूढं गुडाकेशं भगवान् 'अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे। गतासून-गतासूंश्च नानुशोचन्ति पण्डिताः' इत्युपक्रम्य, शरीरिणोऽनश्वरत्वं प्रतिपाद्य कर्मपरायणतां बहु शंसन् कर्तव्यमनासक्ततया कार्यमित्युक्त्वा विश्वस्य रहस्यभूतमात्मतत्त्वं स्वाविश्वरूपेणोपदिश्य 'सर्वोऽपि जनो यन्त्रारूढ इव कर्मानुष्ठानाय प्रकृत्या नियम्यत' इति चोक्त्वा, लोक-संग्रहार्थं कर्म कुरु, तथा निमित्तमात्रं भूत्वा शत्रून् जहीति सर्वमप्युप-निषद्रहस्यं बोधयामास। तदनु पार्थो वीतमोहः 'करिष्ये वचनं तव' इति शपथं कृत्वा युद्धाय कृतनिश्चयोऽभूत्। एतादृशातिगम्भीरोत्कृष्ट-रहस्यतत्त्वोपदेशहेतोरर्जुनस्य स्मरति सम्प्रति कृत्स्नं जगत्। अद्भुता-मृतप्रस्रविणीं गीताकामधेनुमर्जुनवत्सां यो लब्ध्वात्रशिष्टं पिबति दुग्धं स एव लोके परामाप्नोति दशाम्। महति सम्प्राप्ते धर्मसन्देहे सर्वोऽपि जनो धनञ्जयमनोवृत्तिं स्वीकृत्य निष्पक्षपातं भगवतो वचनं विचारयेदनुसरेच्च। एवं स्थिते लेशोऽपि पापस्याम्बुकण इव नलिनीदलं तं न स्पृशेदिति ध्रुवम्। भारतवर्षेऽर्जुनसद्गुणवृन्दामृत-सेकेनाङ्कुरितो धर्मतरुः प्रवर्धमानो विराजते।

---

## ११. ॥ उपसंहारः ॥

सुस्पष्टमेव तत्त्वविदां श्रीमन्महाभारतं प्राधान्येनार्जुनस्य वासु-देवकृतमहोपकारस्य वर्णयति कर्मश्रेणीरिति। ग्रन्थस्यादिमः श्लोकोऽपि

सूचयत्यमुमेवार्थम्—

'नारायणं नमस्कृत्य नरं चैव नरोत्तमम्' इति ।

सूपपन्नं च भवति जय इति नामधेयमस्येतिहासग्रन्थस्य वर्णयतो विजयस्य विजयं पराक्रमं वीर्यं च मनोज्ञक्रमेण । उक्तं च—'जयो नामेतिहासोऽयम्' इति । अतोऽयं ग्रन्थो विजयस्यैवाजन्ममरणं प्रतापमयानि कर्माणि लोकाय बोधयितुं प्रवृत्त इत्यत्र नातिशयोक्तिः । अनेनैव सुस्पष्टं परिपुष्टं च भवति विजयस्य सत्त्वममानुषाणामपि विस्मयकारि । किं बहुना, पञ्चमवेदस्यास्य नायकोऽपि स एव । सुदुष्करं कर्म कर्तव्यमासीत्तेन महायुद्धे । स युद्धोपक्रमे द्विपञ्चाशद्वर्षदेशीय आसीदिति विज्ञायतेऽस्माद् ग्रन्थात् । तथापि स युधि विजयश्रियं परिजग्राह । अहो तस्य वीर्यम् । तस्य जीवितमामरणं धर्माचरणायैवासीदिति न विस्मर्तव्यम् । सर्वेश्वरस्य पार्श्ववर्ती भूत्वापि स निजकर्तव्यनिष्ठतां न कदापि शिथिलीचकार । न शक्नोत्यत्र वर्णयितुं तस्य गुणान् साधु सहस्रफणामण्डितः कुण्डलीन्द्रोऽपि । स सर्वेषामपि जनानामनुकरणीयचरित्र आसीत् । अन्ते च भगवतो व्यासस्यैव वाक्येन वयमपीदं ब्रूमः—

"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥"

॥ ॐ तत्सत् ॥



## ॥ श्रीकृष्णचैतन्यः ॥



अस्ति वङ्गेषु प्रथितप्रभावं महाविभवमभिरूपवैर्यैरध्युषितं वसुमतीललामभूतं नवद्वीपं नाम नगरम्। यच्च भगवत्याः काल्याः मन्दिराद्दशयोजनदेशीयम्। प्रवहति खलु तन्निकषा पुण्यसलिला भगवती भागीरथी। तत्र पुरान्ववात्सुर्विद्वांसः समस्तशास्त्रतत्त्ववेदिनोऽनवद्यब्रह्मविद्याश्रद्धालवः सुगृहीतनामानः। अद्यापि तं विषयं मण्डयन्ति कतिपये तीक्ष्णधिषणा मनीषिणः। प्राचीना विपश्चितः स्वनुष्ठितधर्माणो भगवति भवे दृढभक्तयः शास्त्ररसामृतास्वादेनात्यवाहयन्निखिलं समयम्। प्रपेदिरे च सान्द्रमानन्दं धनापेक्षामन्तरेणैव ज्ञानालोकदानेन हृदयङ्गमशीलेभ्यो गुरुशुश्रूषाचणेभ्योऽन्तेवासिभ्यः।

गते तु काले बहुतिथे ते स्वप्रतपवित्रधर्मं विस्मृत्य प्रारभन्त छात्रेभ्यो निरतिशयां दक्षिणां प्रतिग्रहीतुम्। येनाचिरेणैव महाधनिनः सम्पद्य सुखभोगगृध्नवः स्वार्थप्रसिता भगवदाराधनविमुखाश्च विपर्यास्थन्। प्रनष्टे शैष्ट्ये समुत्तिष्ठति च दौष्ट्ये विष्टपेऽत्र धर्मसंस्थापनाय सृजाम्यात्मानमिति परमकारुणिकस्य पुण्डरीकाक्षस्य सूक्तिसुधामुपजीव्य तदवतारमेव प्रतिपालयन्ती समास्त कृच्छ्रापन्ना चराचरजननी मेदिनी। अप्रमेयो हि क्रियाकलापो रमाजानेः। स कतमं प्रदेशमुत कुलमिह जगतीतले स्वजनुषा प्रसाधयतीति न कोऽपि जानाति मानवः। कदाचित्स धनाढ्यानां गृहेषु लभते जन्म, जातु दरिद्राण-

त्रिगीतान्वयानां वा । कर्दमसम्भूतमप्यरविन्दमानन्दं जनयति चक्षुष्मतां घ्राणतर्पणेन गन्धेन लोचनासेचनकेन च सौन्दर्येण ।

नवमिव चैतन्यं प्रदातुकामो जीवलोकस्य स भगवानस्मिन्नेव नवद्वीपे कस्मिंश्चिद्द्विप्रकुले विपदनाकुले चन्द्रोपरागस्यानुष्ठीयमानेषु द्विजातिभिश्शान्तिकर्मसु जन्म प्रत्यपद्यत । बालकस्य पितामहोऽधिजगाम पद्वाक्यप्रमाणपारावारपारीणताम् । जगन्नाथमिश्रो नाम श्रोत्रियधुर्यो नीलाम्बरचक्रवर्तिनः पण्डितप्रकाण्डस्य दुहितरि पतिसेवानिष्ठायां शच्याख्यायां ससप्तचतुश्शताधिकसहस्रमिते विक्रमाब्देऽमुं जनयामास । बभूवुश्चामुष्य नवाप्रजाः । येषामष्टस्वकालनिधनमुपेयिवत्सु नवमः पित्रो रुदतोः प्राव्राजीत् । दुर्दशाग्राहग्रस्तयोस्तयोरयमर्भकः प्रतिपच्चन्द्र इव सुतरां प्रीतिपात्रमासीत् । सुकुमारस्य कुमारस्य बाललीलाम्, प्रशान्तगम्भीराकृतिम्, स्मितज्योत्स्नाविलसदास्यपूर्णेन्दुम्, मृणालपेशलानि चाङ्गकानि निर्वर्ण्य तौ कथञ्चित्प्राणधारणमन्वमन्येताम् । कालेऽनुष्ठितबालक्रियाकलापस्य शिशोर्विश्वम्भर इति नाम चकार जनकः । माता तु बन्धुस्त्रीणां मतमनुरुन्धती 'नमाये'ति तमाह्वयति स्म । इतरे रुचिराङ्गं तं गौराङ्ग इति कथयामासुः । कार्तान्तिकाश्चायं कुमारोऽनन्यसाधारण्या वाण्या प्रज्ञया च भविता दिगन्तविश्रान्तकीर्तिरिति समाचक्षत ।

अत्यल्प एव वयसि विश्वम्भर उपाक्रमत विद्यामध्येतुम् । बह्वरोचत तस्मै पठनं ग्रन्थानाम् । तत्रापि विशिष्य तात्पर्यमन्वादर्शं तस्य व्याकरणान्वीक्षिक्योः । कतिपयैरेवाहोभिः स बभूव विपश्चि-

त्तल्लजः । पण्डितमण्डलमधितिष्ठन् स सुष्ठु विरराज निशाराज इव नक्षत्रमण्डलम् । न कोऽप्यमुं वादेषु पराजेतुं शशाक; प्रत्युत सर्वोऽपि तत्तर्कप्रभावेण निरस्तपण्डित्यावलेपो बभूव विद्वदग्रिमः । क्रमेण स शिष्याञ्शास्त्राणि पाठयितुं प्रारभत । परश्शताश्छात्रा-स्तदुपदेशवचांसि पाठप्रवचनानि च श्रोत्रपुटेन निपीय परां काष्ठा-मवापुरभ्युदयस्य विनयस्य विज्ञानस्य श्रोत्रियत्वस्य च ।

औपाध्यायिकीं वृत्तिमनुतिष्ठन्नपि गौराङ्गोऽयं यावदपरिग्रह एवासीत् । अथ गणरात्रापगमे स सुरूपां गुणैरनुरूपां वल्लभाचार्यसुतां लक्ष्मीनामधेयामुपायंस्त कुलीनां काञ्चित्कन्याम् । सर्वोपकारक्षमे गार्हस्थ्याश्रमेऽत्र विप्रः सार्धं गृहिण्या षट्कर्माणि विधिविहितान्याचरन् पञ्चमहायज्ञांश्च प्रत्यहमनुशीलयंस्त्रीण्यृणान्यपनेतुं यतते । एवं द्विती-याश्रमं निष्प्रमादमाचरतस्तस्य गतो नातिमहान् कालः । निष्करुणो हि विधिर्मत्सरीव सोढुं न पारयति पुरुषाणां सुखैकतानं श्रेयः । यत् तस्य सहधर्मिणी विधिप्रेरितेन घातुकेनाशीविषेणाप्रतिकार्यविषेण सन्दष्टा पञ्चतामगात् । प्रेयसीवियोगेन भिदुराघातेनेव स समभूद्भग्न-हृदयः । काञ्चित्कालञ्च शून्यतां मनुष्यलोकस्य, क्षणिकतां विषयोप-भोगानाम्, नश्वरतामैश्वर्यस्य, भङ्गुरतां नवयौवनस्य, गगनपुष्पता-माभिजात्यस्य, अतिहेयतामाहोपुरुषिकायाश्चाद्राक्षीत् । अभ्यलषच्च संसारबन्धनानि निर्भेत्तुम्, गात्रसुखानि समुच्छेत्तुम्, अपुनर्निवृत्तये सद्मानि विस्रष्टुम्, सर्वात्मना च नरजीवितं विषमिश्रोदनमिव परि-त्यक्तुम् । निसर्गदुर्निग्रहं मानवचित्तं सकृद् दृढीकृतमपि शनैःशनै-

रूपयाति मार्दवम्, त्यजति पूर्वदार्ढ्यम्, प्रतीच्छति पुनस्त्यक्तपूर्वं विषयजालम् ।

अथ विषयासक्तचित्तो गौराङ्गो विष्णुप्रियाभिधां काञ्चित्कन्यामुपयेमे । तया सह सुचिरं गार्हस्थ्यमनुतिष्ठन् परमां कोटिमध्यतिष्ठदानन्दस्य । पाण्डित्यौपयिकेन च लेभे प्रभूतं वित्तम् । वङ्गेषु च सर्वत्रापि वैदुषीप्रभावप्रसारितधवलकीर्तिः जयश्रियं प्रत्यपादि । इत्थमत्यवाहयत्स महान्तं कालं ज्ञाननिर्जिताखिलबुधनिकरः ।

अथ कदाचिदसौ पैतृकं श्राद्धमाचरितुं गयामगात् । तत्र प्रद्योतमानमुज्ज्वलदेहभासा, समन्ततो विकिरन्तमानन्दामृतविन्दून् मृदुमधुरस्मितचन्द्रिकया, मूर्तिमन्तमिव धर्मम्, आश्रयमिव वैराग्यस्य, तपोवनमिव तपसः, धामेव समतायाः, भाग्यमिव भगवद्भक्तेः, योगिनमपरोक्षज्ञानिनं कञ्चिन्महात्मानं सोऽद्राक्षीत् । ईश्वरपुर्याख्यया विख्यातो जितेन्द्रियो द्वैतवेदान्तप्रतिष्ठापनाचार्यस्य श्रीमन्मध्वमुनेरनुयायी परमवैष्णवोऽसौ भगवद्भक्तिं जनतासु विशदीकुर्वन् धर्म्यपथेन सञ्चरमाणान् कर्तुं मानवान्, तांस्तान् प्रदेशान् गत्वा बोधयन्नास्त । तथा हि—"भगवतो वन्दारुजनमन्दारस्य भूतभावनस्य सेवायां त्रिकरणीपूर्वकं निरता एव लभन्ते मनःप्रसादम् । सर्वैरपि मानवैस्तादृशे भक्तिसुलभे राधारमणेऽजरामरणे दृढभक्तिभिर्भाव्यम् । निर्मलैरेव भगवत्प्रसादसुधारसः पेपीयते । समत्वापन्नः प्रपन्नः पन्नगारिध्वजं प्राप्नोति कैवल्यम् । गृहमेधिभिरपि कर्मफलासङ्गं विना तदर्पितमानसैस्तत्प्रीत्यर्थमेव सर्वं कर्मानुष्ठेयम्" इति ।

श्रुत्वा च सुमधुराणि मनोहराण्युपपत्तिमन्ति यतेरुपदेशवचनानि गुणगृह्यो जन्मकालश्रुतेश्वरसंस्तवो विश्वम्भरः क्षणेन व्यस्मरद्विद्याविलेपं संसारमोहञ्च। ललितलीलासंमोहितविश्वं कमनीयवपुषं वेणुनादहृतसर्वलोकं राधाननाम्भोजभृङ्गं सङ्गीतश्रृङ्गारपरीतस्वाङ्गं भगवन्तं श्रीकृष्णमन्तरेणाविरासीत्तस्य मनस्यनन्यसदृशं प्रेम। इयेष च स भगवदनुग्रहमुपलब्धुं दास्येन। गृहं प्रतिनिवृत्तस्य तस्य मनस्येवं बुद्धिरुदभूत्—"ग्रन्थज्ञानेन किं प्रयोजनम्? शास्त्रवादेषु जयेन किमु मोक्षोऽधिगम्यते? इन्द्रियनिग्रहादृते नार्हति नरः आत्मज्ञानमनश्वरं शान्तिञ्च शाश्वतिकीमुपलब्धुम्। पुरुषोत्तमस्य परिचर्यया श्रवणेन कीर्तनेन च गुणगणानां मानव ऐहिकमामुष्मिकञ्च लभते शर्म। श्रीकृष्णात्परं न दैवतमस्ति लोके। स एव मां पापपारावारादुत्तारयिष्यति प्रभुः" इति। ततः स चक्रपाणेरतीव विचित्राणि चेष्टितानि स्मारं स्मारं सानन्दबाष्पवर्षमनेकशोऽहृष्यत्, अगायत्तद्गुणान् भक्तिपारवश्येन च तन्मयीभूतोऽनृत्यत्।

नवद्वीपवासिनस्तून्मत्तवत् परिभ्रमन्तं नृत्यन्तं गायन्तं हसन्तं विलपन्तमश्रुधारा विमुञ्चन्तं तं वीक्ष्य दूषयितुमारभन्त; यत्तेषां तदीयविचित्रचेष्टितानि दुर्बोधान्यासन्। भगवत्प्रेममदिरापानमत्तं तं ते नाज्ञासिषुः। केवलं पाठप्रवचनानि, विद्वद्गोष्ठ्यः, शास्त्रार्थवादास्तेभ्योऽरोचन्त, न भक्तिरसपूर्णानि साधुवचांसि। स्वप्रतिष्ठालोपमाशङ्कमानास्तत्रत्याः केचित्पण्डिताः सार्धमितरै राजाधिकारिणमुपेत्य विश्वम्भरस्य दुर्विनयं न्यवेदयन्। तेन प्रतिहतकर्तव्यः स सपरिवारो राजपुरुषा-

न्तिकमागत्य पीयूषस्यन्दिभिर्भक्तिरससम्प्लुतैः सुमधुरोपन्यासैस्तं पर्यवस्थाप्याप्रतिबद्धप्रसरो यथापूर्वं जनतासेवामन्वतिष्ठत् । क्रमेण बहवस्तत्पवित्रसूक्तिवारिधारानिर्धौतपापास्तदनुयायिनोऽभूवन् । देवताप्रीत्यर्थं क्रियमाणानि पशुमारणानि वीक्ष्य स नितान्तं खिन्नान्तःकरणः समजनि । चतुर्विंशतिहायनोऽसौ दुर्मार्गगान् दुर्मेधसो विनेतुकामः संन्यासदीक्षामेवौपयिकोत्तमं मन्वानः केशवभारतीनाम्नः संयमिनः संन्यासं प्रतिगृह्य कृष्णचैतन्य इति नूतनमभिधानमधिजगाम। तदानीं नवद्वीपौकसः सुमेधसस्तं ज्ञानप्रदमाचार्यं मार्गदर्शकं गुरुमविद्यान्धतमसभास्करञ्चामंसत । तद्वचनामृतं च पायं पायं नाययुस्तृप्तिम्। तेन जेगीयमानस्य नन्दनन्दनस्तवस्य श्रवणाद्विना न लेभिरे सुप्तिम् ।

ततः पूर्वसागररोधसि शोभमानं जगदाभरणभूतं स समाससाद भगवतो जगन्नाथस्य पुर्याख्यं पुण्यक्षेत्रम् । तत्र रमाजानेर्महिमानं गानेन भजनेन नर्तनेनाराधनेन च संमिलिताञ्जनान् बोधयन् प्रशस्तामवाप कीर्तिं प्रवृद्धंश्च भक्तवृन्दम् । तद्देशाधिपतेः प्रतापरुद्रस्य शास्त्रज्ञानेन कृतार्थंमन्यो भट्टाचार्यसार्वभौमाभिधः सचिवोत्तमोऽप्यस्य निसर्गरमणीयं वचनं निशम्य, आस्वादितब्रह्मानन्दरसं सुकर्मजातं च निशाम्य वलवदाकृष्टहृदयः स्वप्रज्ञावलावलेपमपहाय भक्तिपथपरायणो बभूव ।

अथ कदाचिच्चैतन्यो दक्षिणापथं गन्तुं प्रतस्थे । गच्छतस्तस्य मध्येमार्गं कश्चन महाकुष्ठरोगी दृष्टिगोचरतामयासीत् । समसर्वजन्तुर्निसर्गसुकुमारमानसः सन्तमात्मानं सर्वेषु भूतेषु जागरूकं पश्य-

न्नसौ प्रेमार्द्रनयनस्तमार्तमाश्लिक्षत्। स्पर्शमात्रेण च तं व्यधान्नीरोगम्। ततः काञ्चीमधुराश्रीरङ्गमहेन्द्रशैलवेङ्कटाचलादीनि पुण्यक्षेत्राणि गणरात्रमध्युष्य, कुमारीं सेतुञ्च सन्दृश्य, तत्र तत्र प्रयततीर्थेषु कृतावगाहो रजतपीठे पुण्डरीकपुरे च सञ्चर्य पुनः पुरीक्षेत्रमाययौ। इत्थं देशाद्देशमटतस्तस्य शतशो जना आपामरपाण्डितमाबालवृद्धमानिषादश्रोत्रियं वशवर्तिनो भक्तिभृत्या बभूवुः। एवं शिष्यसमूहोऽस्य क्रमेण सुतरामवर्धत। अथासौ छात्राग्रेसरौ नित्यानन्दाद्वैताचार्यौ धर्मप्रसारकर्मणि नियुज्यावादीत् "भगवद्भक्तिसुधाप्रवाहो यथा श्वपाकपक्कणमपि सम्प्लाव्य प्रयतं कुर्यात् तथा युवाभ्यामाधेयो यत्नः" इति। एकमात्रशिष्यानुगतो भगवतो राधावल्लभस्य नानाविधजगन्मोहनलीलारङ्गम्, शान्त्या, सौन्दर्येण, सौरभेण चावधीरितमाहेन्द्रनन्दनं कालिन्दीतीरनिकुञ्जैर्मञ्जुलमतिपावनं गोवृन्दैरध्युषितं वृन्दावनं प्राप्य भगवन्तं प्रतिपदं सानन्दं स्मारं स्मारं तल्लीनो भूत्वा तत्सुमधुरलीलाकलापगुणान् गायन्, नृत्यन् महान्तं कालं क्षणमिव क्षपयामास। ततो वाराणसीं गत्वा पुरीक्षेत्रं न्यवर्तत श्रीमान् कृष्णचैतन्यः।

मलिम्लुचा घातुका दुराचाराश्चामुष्य सदुपदेशं श्रुत्वा स्वदुर्वृत्तं विहाय सन्तं पन्थानं प्रत्यपद्यन्त। एकदा सशिष्ये काशीतः पुरीमागच्छति मार्गनिकटे भक्तिभराक्रान्ते तन्मयीभावमापन्ने समाधिनिमग्ने तस्मिन्, तेनैव मार्गेण गच्छन्तः केचिद्यवनयोधाः शिष्यांस्तांश्चोरान् श्रीचैतन्यञ्च तद्बन्धनस्थं मन्यमानास्तन्मोचनाभिलाषेण यावदनुयायिनः प्रहर्तुं प्रवर्तन्ते, तावदसौ प्रबुध्य निजवृत्तान्तं तेभ्यो न्यवेदयत्।

भटेष्वन्यतमो यवनधर्मे सुष्ठु पठिती वदनकान्त्या प्रकाशितदशदिशमेनं प्रेक्ष्य स्वधर्मप्राशस्त्यं वर्णयितुमुपाक्रमत। श्रुत्वा च विस्रब्धं तद्वचः श्रीमांस्तद्धर्मगोचरान् बहूनसमीचीनान्विषयान् प्रदर्श्य तं श्रीकृष्णभक्ति-प्रभावं बोधयामास सविस्तरम्। आकर्ण्य च तं सर्वेऽपि यवना-श्चैतन्यस्य शिष्यतामुररीचक्रुः।

अथ कदाचित् कश्चिद्विप्रः स्वपुत्रस्य चैतन्यानुयायित्वेन प्रवृद्ध-क्रोधस्तं प्रहर्तुं तनयञ्च गृहमानेतुं तदाश्रमपदमाससाद। तदानन-पूर्णचन्द्रास्मितज्योत्स्नाप्रकरस्पर्शमात्रेण ब्राह्मणः सहसा निर्धूतामर्षः प्रसन्नस्वान्तो भूत्वा गुरुं तं साष्टाङ्गपातं प्रणम्यात्मनोऽपि शिष्यत्वेन स्वीकरणाय प्रार्थयामास।

इत्थमत्रशिष्टं कालं जीवितस्य स हरिकृपापात्रीभूतस्तत्त्वज्ञाना-मृतास्वादेन, तद्गुणगानेन, तत्पादपङ्कजाराधनेन, ध्यानेन, वैराग्येण, समत्वबुद्ध्याऽऽसादितर्द्ध्या च पुरीपुण्यक्षेत्र एवातिचक्राम। प्रत्यहं प्रत्यूष एव स्नानसम्पूतसर्वाङ्गो जगन्नाथस्य स्थित्वा पुरतस्तं विविधैः श्लोकैः सगीतैः सतालल्यैर्नर्तनैश्चोपश्लोकयितुमारब्ध। तल्लीनतापन्नस्य तस्य कृत्स्नमप्यहोऽवसितं न विदितमासीत्। यदन्तेवासिनस्तं प्रबो-धयेयुः, तर्हि निर्गतसमाधिः कर्तव्यशेषं लौकिकमनुतिष्ठेत्। न तस्यासीदाहारेऽभिरतिः, शरीरिकव्यापरेष्वासक्तिः, स्ववेश्मनि वा स्नेहः। देवालये वा शिष्यगृहे वा, इतरसद्मनि वा प्रत्यवसानमकार्षीत् सहृद-येषु भक्तेषु परमया करुणया। ततः श्रीमद्भागवतम्, भगवद्गीताम्, आहोस्विद् ब्रह्मसूत्राण्यधिकृत्य जडधियामपि यथा विशिष्टा हरौ भक्ति-

रुत्पेचत तथा मनोहारिण्या वाण्यासौ जनानां प्रवचनमकार्षीत् । सायं तु ताललयान्वितं सङ्गीतस्निग्धं जनमनस्सम्मोहनं विस्मारितनिखिलजगद्व्यापारमपारं जगन्नाथभजनं प्रावर्तयत् । राधादृगञ्जनस्य यशोदानन्दनस्य गोपिकाकुमुदवनपूर्णचन्द्रस्य तस्य शृङ्गारिणोऽप्रमेयक्रियाकलापस्य हरेर्लीलाविलसितान्यानन्दसागरानिमग्नो मनसा ध्यायन्नवापावाङ्मनसगोचरस्य परमानन्दस्य परां कोटिम् । वल्लवीनां श्रीकृष्णे यादृशी स्वाभाविकी भक्तिः, निरतिशयः प्रेमा, निरूढोऽनुराग आसीत्, तादृशमलौकिकं पारमार्थिकं हार्दमजस्रमास्वाद्य च निर्वृतिमाप सः । राधाकृष्णयोर्मिथोऽनुरागः प्रकृतिपुरुषयोरिवाभेद्यसम्बन्ध इति च निश्चिकाय ।

एवमात्मतत्त्वं परमात्मतत्त्वं च प्रतिकलं साक्षात्कुर्वाणस्य तस्य नासीत्पूज्यबुद्धिर्ब्राह्मणे विपश्चिति वा नापि नीचबुद्धिश्चण्डाले निरक्षरकुक्षौ वा । कोऽपि गोपालबालो विगीतकुलीनानामपि वल्लवानां मध्ये सुचिरं निवसन् विहरंश्च स्वदिव्यमहिमानं प्रदर्श्य तान् कृतकृत्यान् व्यधत्त खलु ! श्रीचैतन्योऽपि राज्ञः प्रतापरुद्रस्य, सचिवस्य भट्टाचार्यस्य, पञ्चमस्य हरिदासठक्कुरस्य च परस्परं न कमपि भेदमजगणत् । बाला वृद्धाः सुखिन आर्ताः स्त्रियः कुलीना दौष्कुलेयाश्च सर्वेऽपि भजनाराधननर्तनसङ्गीतसमयेषु भेदचिन्तां पूर्वद्वेषञ्च विहाय भ्रातर इव समानशीलतया भगवत्पूजानिरता बभूवुः । कर्ममार्गैकासक्तचित्तास्तत्त्वज्ञानमूढा अनभ्यस्तभगवन्नामस्मरणा जना न तस्यातोषयन्मनः । ब्रह्मानन्दाधिगमे तत्प्रसादसुसाधे भगवद्भक्तिः तन्नामस्मरणञ्च

प्रधानं साधनमिति तस्य निश्चितं मतमासीत्। अस्य प्रचारणाय स तत्र तत्र समस्थापयन्मन्दिराणि मठांश्च। तान्यद्यापि सुगृहीतनामयशःपटलपटेन परिधापयन्ति दिगङ्गनाम्।

इन्दिरापतिरिव सौन्दर्ये, अजातशत्रुरिव सत्ये, अर्भक इव सौम्यभावे हिमवानिव स्थैर्ये, गाङ्गेय इव धैर्ये, अर्जुन इव भगवद्भक्तौ बभूव भव्यचरित्रः श्रीचैतन्यः। शुचिना स्मितेन, मधुरेण वचसा प्रयतेन चारित्रेण, अनन्येन हरिप्रेम्णा, अनवद्येन साम्येन, हृदयङ्गमेनोपदेशवचनेन, प्रशस्तेन सर्वभूतहितासङ्गेन, स्वार्थपराङ्मुखेन च कार्यकलापेन जनमनांसि वितन्वन्नभ्यर्हितपथनिष्ठानि तस्मिन् पुण्यक्षेत्रेऽष्टादशशरदः उषित्वा सप्तत्रिंशन्मिते वयसि पार्थिवं संत्यज्य शरीरं श्रीकृष्णचैतन्यः स्वेष्टदेवेन राधामोहनेन भक्तप्रेम्णा सादरं समाहूतो वैकुण्ठमकुण्ठितानन्दसम्भ्रमवाप। अहो महाप्रभावा भगवद्भक्तिः कल्पलतेवोपासकानां किं किं न साधयति!



## ॥ उपनिषन्महिमा ॥



धर्म एव जनताभ्युदयस्य निकषोपल इति मन्यन्ते मनीषिणः। इह जगति विद्यमानानां विविधानां जनतानां धर्मा विभिन्ना एव दृश्यन्ते। यावद्धर्मो जनताभिवृद्धौ साह्यमातनोति तावत्स जीवत्येव। लोकधारणक्षम एव धर्मो जनादरपात्रं भवति नान्यथा। ग्लायति धर्मे लोको ह्रासमाप्नोति। आसन् पुरा यवनाः रोमकाः ऐगुप्तास्तथान्ये जानपदा आप्यायमानाः यत्तेषां चैतन्यापादका बभूवुर्धर्माः। तत्तद्धर्माणां चैतन्यहानौ नश्यन्त्येव जानपदानां संस्कृती राष्ट्राणि च। अत्र निदर्शनान्युपर्युक्ता जानपदा भवन्ति। अत्यर्थप्रत्न आर्याणां वैदिकधर्मस्तु नैतादृशीमनुरुध्यते रीतिम्। तच्चैतन्यस्य तत्तेजसो वा न कदापि ग्लानिर्भूता भविष्यति च। स सर्वदा मध्यह्नार्क इव विजृम्भेत समुच्छ्रितेतजाः। आधाररचनायाः सुदृढत्व एव यथा भवनं वात्यादिभिरुन्मूलयितुं न शक्यते तथायं धर्मः सद्ब्रह्मतत्त्वनिरूढो गाढं न केनापि प्रधर्षयितुं शक्यते। प्रत्युतायमनारतमुपचीयमानो विराजते।

को नाम धर्मः? भजते ह्यसौ कलालक्षणं विज्ञानलक्षणं च। यतोऽयमलौकिकवस्तुतत्त्वावधारणनिरतस्ततो विज्ञानलक्षणः। ब्रह्मतत्त्वोपदेशक एव स इत्यर्थात्सिद्धं भवति। तेन व्यक्तस्यास्य विश्वस्योत्पत्तिर्निदानं स्थितिर्लयश्चेत्येते विषयाः सम्यक् प्रतिपादनीयाः।

वेदान्तापरनामधेयाभिरुपनिषद्भिर्निस्सन्देहममी विषयाः साधु विविच्य विशदीकृताः। जगति नान्यत्र कुत्रापि तादृशज्ञानं धर्मग्रन्थेषु भवति सुदर्शम्। सुमेधोभिर्ग्राह्याः सन्देहनिरासिकाश्चेहोल्लिखिता भवन्त्युपपद्यत्तयः। नेयमतिशयोक्तिर्यदत्र प्रतिपादितं ब्रह्मतत्त्वं जीवात्मपरात्मसम्बन्धो विश्वरहस्यञ्च परमाद्भुतानीमानि नास्तिकानामपि प्रत्ययापादकानीति। उच्यते चासूपनिषत्सु। यथा—ब्रह्मैवास्य विश्वस्य स्रष्टा पालयितोपसंहारकश्च। "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व ब्रह्मेति" इति। ब्रह्ममयेऽस्मिन्महानाटके सूत्रधार इव स एव ब्रह्मा जघन्यभूतानि तत्तत्स्वभावानुरोधेन समुचितेषु स्थापयति लोकेषु। धर्मः कलालक्षण इत्युक्तम्। अतस्तद्दर्शितेन पथा आत्मात्मानं पवित्रमभ्युदितञ्च कुर्वन् शरीरमपि बाढं धर्मसाधनसमर्थं कर्तुं प्रभवेत्। अन्यच्च, यथा नरा ऐहिकभोगाननुभूय सन्तुष्टिं पुष्टिं शान्तिञ्च जीविते लभेरन्, तथा धर्मस्तेभ्य उपायान् प्रदर्शयेत्। सौन्दर्यानुभवेन मनसो मोदः सञ्जायते। ततः शान्तिपुष्टी अनायासेनोत्पत्स्येते। रामणीयकानुभूतिर्हि कलायाः प्रयोजनम्।

वैदिकधर्मस्य माहात्म्यं वर्णयितुं न केनापि शक्यते। तदनिर्वचनीयमिति किमु वक्तव्यम्। अत एवोक्तम्—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति। अस्य धर्मस्याकरस्तूपनिषत्प्रकरः। सर्वस्यापि वेदः प्रथमं प्रमाणं भवति। शरीरस्योत्तमाङ्गमिव वेदस्योपनिषच्छीर्षमुच्यते। वेदान्त इति तस्या नामान्तरञ्च।

वैदिकधर्मस्य सार आसूपनिषत्सु संदृश्यते। ललितकेलिकलालोलाया वाणीकोकिलाया उपनिषच्चक्रमुद्यानं विद्योतमानं विद्यत इति वर्णयन्ति कवयः। अस्मादेवोपनिषदां श्रैष्ठ्यमुन्नेतुं पारयन्ति प्रज्ञाः। उपनिषच्छब्दस्य निर्वचनमेवं भवति— उपनिषीदति वेदसमीपे तिष्ठति। आहोस्विदरण्ये गुरुः समीप उपविश्यात्यन्तरहस्यभूतं ब्रह्मतत्त्वं शिष्येभ्यो यत उपदिशति तत इयमुपनिषदिति। रहस्यमित्यप्यस्या अर्थोऽस्ति। त्रैगुण्यविषया वेदाः प्रायेण कर्मनिष्ठाः। तथापि संहितात्मानस्ते काव्यसम्मिताः प्रतिभानभाजः प्रत्यग्रविषयरचनाचातुरीपराश्च विद्यन्ते। ब्राह्मणग्रन्थास्तु वेदव्याख्यानरूपाः प्रतिभानरहिता विमर्शनिष्ठाश्चावतिष्ठन्ते। तेषां प्रादुर्भावः क्रिस्तपूर्वं त्रिचतुरसहस्रवत्सरेभ्यः प्रागभूदिति मतं भारतीयानां विदुषाम्। पाश्चात्यास्तु ते क्रिस्तपूर्वमष्टमपञ्चमशतकयोर्मध्यकाले प्रादुरासन्निति मन्यन्ते। प्राधान्येन ब्राह्मणानि गद्यनिबद्धानि भवन्ति। सर्वेषामपि वेदानां पृथक् पृथक् ब्राह्मणानि विद्यन्ते खलु। ब्रह्मणो वेदस्य सम्बन्धि व्याख्यानं तदुपबृंहणं वा ब्राह्मणं स्यात्।

त्रैविध्यं भजति ब्राह्मणग्रन्थानां विषयः—विधयः, अर्थवादाः उपनिषदश्चेति। आरण्यकानि चात्रैवान्तर्भवन्ति। एषामारण्यकानां विषयः सुदुर्बोधः परिपक्वमतिग्राह्यश्च भवति। यतस्स परतत्त्वमन्तरेण मीमांसामनुशीलयन् निश्चितार्थं बोधयति। यं च वानप्रस्थो गुरुः शान्तिभूयिष्ठायां वनावनौ शिष्याननुशास्ति। उपनिषदोऽपि तत्तदारण्यकग्रन्थानां मध्ये वान्ते वा सङ्घटिता विराजन्ति। तासामपि

प्रतिपाद्यमतीव दुरूहं नियतेन्द्रियमननास्पदं च भवति। प्रायेणारण्यकानामुपनिषदाञ्च भाषा ललिता काव्यमार्गानुसारिणी च दृश्यते, न तु वैदिकभारतीव क्लिष्टा। यद्यप्युपनिषदो ब्राह्मणान्तर्निविष्टाः तथापि तेभ्यो नितरां भिद्यन्ते। यतस्तासां प्रतिपाद्यं नवीनं कञ्चिद्धर्ममुद्भावयति घोषयति च। ता ज्ञानप्रतिपादिकाः, इतराणि तु कर्ममर्मोपदेशकानीति विवेकः। उपनिषत्पठनेन नरो ब्रह्मज्ञानमात्मरहस्यं चोपलभ्यापवर्गप्राप्तये यतते। विरक्तो भवति। सर्वभूतेष्वात्मानं पश्यति। आत्मनि च सर्वभूतान्यवलोकते। ज्ञानाभावे न निश्रेयससिद्धिर्भवति। अतस्तादृशज्ञानाधिगमायोपनिषत्सार एव ग्राह्यः।

मुक्तिकोपनिषद्वाक्येनोपनिषदोऽष्टोत्तरशतसङ्ख्यामिता इत्यवगम्यते। तथापि दशैव नितरां प्रज्ञास्त्वयाणामाचार्यवर्याणां भाष्यैरुपेता विशिष्टतया विभाव्यन्ते। पाश्चात्यास्तु, बृहदारण्यकच्छान्दोग्यतैत्तिरीयैतरेयकौशीतक्यः पञ्चैवोपनिषदो गद्यनिबद्धा अतिप्राचीनाः पद्यनिबद्धा अन्यास्तु अर्वाचीना इत्याकलयन्ति। आहत्य द्विशतीदानीमुपनिषदामुपलभ्यते। अत्र वेदानुगता ब्रह्मतत्त्वविवेचनचणाश्चाबहुला एव सन्ति। अन्यास्तु तत्तदाचारबोधिन्यो विविधदेवपूजाक्रमनिर्देशिन्यश्च भवन्ति।

ब्रह्मजिज्ञासायां स्त्रीपुंसभेदो न गण्यते। यत्पुमांसः स्त्रियो ब्राह्मणाः क्षत्रिया दासीपुत्राश्चोपनिषत्सु ब्रह्मज्ञानकौतुकिनो दृश्यन्ते। गार्गी नाम काचिल्ललना पठितिनी शास्त्रेषु वैदेहस्य जनकस्यास्थाने

ब्रह्ममीमांसागोष्ठीषु भृशं चन्द्रकलेव तारावलीषु विरराज। कदाचित्सा सृष्ट्युत्पत्तिमधिकृत्य महर्षिमन्वयुङ्क्त याज्ञवल्क्यम्। अन्यदा सा वेदान्तविज्ञानसुनिश्चितार्थमुनिगणविभूषितं सदः प्रविश्य तमेवाह्वयत। वनं प्रति यियासुं याज्ञवल्क्यं तत्पाणिगृहीती मैत्रेयी चात्मब्रह्मतत्त्वमपृच्छत्। तदा स तयोरैक्यं तामवागमयत्। तथा हि—यथा जले विक्षिप्तं लवणं नामरूपे विहाय तत्र लीनं तदभिन्नं च जायते तथाऽऽत्मा ब्रह्मणि लीयते तदभिन्नश्च भवतीति। बृहदारण्यकोपनिषदुक्तेनानेनोदन्तेन सुव्यक्तमेतद्भवति यद्वैदिककालीनाः सीमन्तिन्यः शास्त्रेषु परं प्रावीण्यमुपगताः स्वातन्त्र्यभाजो ब्रह्मज्ञानकुतुकिन्य एव पतिमनुव्रता बभूवुरिति।

कासुचिदुपनिषत्सूल्लिखितान्याख्यानकानि वैदिकयुगस्य वर्णसौहार्दं जनहृदयवैशाल्यं च निर्दिशन्ति सहृदयानां हृदयमावर्जयन्ति। यत्तदा नासीद्ब्राह्मणानामितरेषाञ्च सङ्घर्ष आधुनिकानामिव। क्षत्रिया अपि ब्राह्मणानामुपदेष्टारोऽभूवन्निति च ततोऽवगम्यते। महाराजो जनकः स्वज्ञानसम्पदा ब्राह्मणानपि ब्रह्ममीमांसायां पराजयत। महर्षिर्याज्ञवल्क्योऽपि राजर्षेरस्मादेव पश्चाद्ब्रह्मतत्त्वोपदेशमविन्दत। छान्दोग्योपनिषदि निर्दिष्टः कश्चिच्छ्वेतकेतुर्नाम विप्रः उद्दालकारुणेः पुत्रः पाञ्चालेषु प्रवाहणजाबालमुपेत्य महीक्षितं स्वपाण्डित्यं प्रदर्शयितुमयतिष्ट। किन्तु राज्ञः पृच्छाः समाधातुमसमर्थो भूत्वा परिखिन्नः स पितरमुपेत्य तं विषयमविजज्ञुषा तेन सार्धं पुना राजसभां प्रपेदे। तत्र नृपस्तावता विप्रैरविदितां राजन्यैरेव विज्ञातां परेतस्यात्मनो दशां

तयोर्न्यवृणोत् । तदनु, सर्वमेतद्विश्वं ब्रह्ममयम्, तदेव सत्यम्, आत्मैव ब्रह्म, 'तत्त्वमसि श्वेतकेतो' इत्यादिना जीवब्रह्मैक्यं चोपदिदेश । इत्थं कैकेय्यादश्वपतेः क्ष्माभृतो बहवो ब्राह्मणाः आत्मोपदेशमगृह्णन् । शूद्रा अपि तदानीं धराराज्यं निर्वहन्तो ब्रह्मज्ञानासक्ता अभूवन्निति कश्चिदपर आश्चर्यावह उदन्तः स्मृतिपथमारोहति । काश्मीरेषु राजा जनश्रुतिः पौत्रायणो विविधोद्यमैर्निष्पादितनिखिलप्रजाक्षेमो रैक्वाभिधं दरिद्रं ब्रह्मज्ञानपारदृश्वानमाकर्ण्य तन्निकटमासाद्यानभ्युपगतशूद्रोपदेशमपि तं गोसहस्रस्य स्वदुहितुश्च प्रदानेन समाराध्य तस्मात् प्रापदुपदेशम् । अस्याः कथाया जनतायाः स्थितिर्वर्णव्यवस्था च सम्यगवगन्तुं शक्यते ।

सर्वाणीन्द्रियाण्यात्मनः सत्त्व एव व्याप्रियन्ते तन्निष्क्रमणे च जडानि भवन्ति । शरीरं दारुवज्जडम् । अतस्तस्य कर्मस्वातन्त्र्यं न घटते रथस्येव । बुद्धिस्तु सारथिरिव रथस्वामिन आज्ञाधारिणी न स्वायत्तकर्मा । मनोऽपि प्रग्रह इव सारथिभूताया बुद्धेर्वशवर्ति ज्ञानरहितञ्च । इन्द्रियाणि च हया इव यत्र कुत्रापि विषयाभिमुखं प्रधावन्ति । सर्वेषामात्मैवाधिष्ठाता चैतन्यदायी च । तदपगमे सर्वेऽपि सत्वरं विनश्यन्ति । इदमखिलं विश्वं ब्रह्मणः शरीरम् । तत्रत्यानि वस्तूनि तस्याङ्गानि भवन्ति । यथा—"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" (मुण्डक) इति । अहो ! अतिविचित्रा ह्यार्याणां महर्षीणां प्रज्ञानसरणिः । एतादृशं सर्वातिशायि तत्त्वं विज्ञाय को नामान्येषां नराणां प्राणिनां वा विरोधं

कलयेत् । सर्वमपि ब्रह्माण्डं स स्वशरीरे पश्यति । बहिश्च सूर्या-चन्द्रादिषु सृष्टवस्तुषु ब्रह्मण एव महिमानं परिभावयन् ब्रह्मानन्द-मवाप्नोति ।

अनेन हेतुवादेन कर्माणि सर्वैरपि त्याज्यानीति न केनाप्यभ्यू-ह्यम् । यतः उपनिषद एव बोधयन्ति—पुरुषस्य जीवितं यज्ञरूपम् । सत्यागमैहिकभोगा भोक्तव्याः । सत्कर्मकारी नरः पुण्यं लभते । असाधुकारी पापमाप्नोति । तेन तस्यान्धेन तमसाऽऽवृता लोका एव गन्तव्या भवन्तीति । अमुमेवार्थं याज्ञवल्क्य आर्तभागायोपादिशत् । स्वकर्मानुरोधेन मानवः स्वभावं प्रतिपद्यते । तथा चोक्तम्—बुद्धिः कर्मानुसारिणीति । उपनिषत्सारसर्वस्वभूतायां भगवद्गीतायामप्ययमेवार्थः स्फुटीकृतः । यदि नरः कर्माणि विनैवासक्तिं कर्तव्यानीत्येव करोति तर्हि तस्य न भवति कर्मलेपः । तथा कर्मणा ज्ञानलम्भकेन स संसिद्धिमाप्नोति । जनकः कर्मयोगी सन् ब्रह्मज्ञानमधिजगाम । अथ नर आसङ्गेन यज्ञादिकर्माण्यातनोति तर्हि रन्ध्रपरीतनौकाधिरूढ इव स संसारसागरे निमज्जति । यत्तानि कर्माणि रागोपसृष्टानि अविद्या-जन्यानि च भवन्ति । इत्थं सद्गुणोपसंग्रहणाय सत्कर्मानुष्ठानाय च तत्र तत्रोपनिषत्सु दृश्यतेऽञ्जसा कृतमनुशासनम् ।

यदि यः कोऽप्यभिप्रैति यदुपनिषद इहलोकोपकारिधर्मान् जनताहितोपदेशकान् नोपदिशन्ति, प्रत्युत परिव्राजकधर्मानिति, तर्हि सोऽधोनिर्दिष्टां कथां बृहदारण्यकोपनिषदन्तर्गतां पठतु सारञ्च परि-गृह्णातु । कदाचिद्देवा मनुष्याः असुराश्च प्रजापतेरन्तेवासिनो बभूवुः ।

गुरुशुश्रूषानिरता देवाः कंचित् कालमुषित्वा गुरुं ज्ञानोपदेशं याचित्वा तस्माद् "द" इत्युपदेशमधिगत्य "दाम्यते"ति तस्यार्थमग्रहीषुः। मनुष्यास्तु कालान्तरे दत्तस्य तस्यैवोपदेशस्य "दत्ते"त्यर्थमकुर्वन्। असुरास्तु तस्य "दयध्व"मित्यर्थमबोधिषत। प्रजापतिश्च तत्तदर्थमभ्युपागमत्। अमुमेवार्थं स्तनितेन स्तनयित्नुर्लोकस्य बोधयति--दाम्यत, दत्त, दयध्वमिति। एतेन, आत्मसंयमः, दानम्, दया च सर्वैरपि नरैरादरणीया गुणाः। तैरेवाभ्युन्नतिश्च जगति प्राप्या। अन्यथा नरः पशुतुल्यो भवतीति निर्गलितं सम्पिण्डितोऽर्थः। वर्णाश्रमधर्माश्च साधु मानवैः परिपालनीयाः इत्युपनिषद उद्घोषयन्ति। उपनिषदध्ययनेन सर्वोऽपि संसारविरक्तो गार्हस्थ्यं नैव निर्वहेदिति शङ्का केषांचित्तु स्यात्। तन्निर्मूलम्। उपनिषदस्तु स्फुटमनुशासति यद् ब्रह्मचारी गुरुकुले वेदमधीत्यानुरूपां कुलीनां कन्यां परिणीय कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धर्मकर्माणि विदधत्संयतेन्द्रियो भूयादिति। यद्ययमेतमुपदेशं सुष्ठ्वनुतिष्ठति तदास्य जायते संसारे न किमपि कृच्छ्रम्।

अधुना विश्वविद्यालयेषु स्नातकानां प्रशस्तिप्रदानकाले कश्चित्सदुपदेश उदीर्यते। नायं विधिराधुनिकैरिदम्प्रथमतयोदभावि। वैदिककालीनः खल्वयं सम्प्रदायः। तादृशोदात्ता विद्वज्जनश्लाघापात्रमद्वितीयोपदेशपरिपाटी नान्यत्र कुत्रापि पाश्चात्येषु यवनेषु वा जागर्ति। तैत्तिरीयोपनिषद्ययमुपदेशसार्वभौमः समुल्लसतितमाम्। तथा हि---सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं

धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । ... मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । ... श्रद्धया देयम् । ... " इति । नवीननागरिकतापरीते जगति सत्यस्य वा धर्मस्य वा कियान् प्रकर्ष इति सुधियो विदन्त्येव । विषयसुखास्वादाय धननिचयलाभाय भुजबलोत्कर्षेण प्रभुत्वसम्पादनाय यस्यानुकूल्यानि महान्ति भवन्ति स एव सर्वोत्कृष्टत्वेन परिगण्यते । तादृशभावनाव्याप्ते जगत्यधुना कथङ्कारं मातृभक्तिर्वा पितृभक्तिर्वा आचार्ये पूज्यबुद्धिर्वा बालकानां सम्पद्येत । 'प्रजायै गृहमेधिनोऽतीव विरलाः । कन्यापितुस्सकाशात्प्रभूतं वित्तमादातुकामो वा कन्यासौन्दर्यरज्ज्वाकृष्टचेता वा युवा परिणयविधिमनुमन्यते । अन्यथा पित्रोर्वचनं तृणाय मन्यते । यावज्जीवनपरिग्रह एव तिष्ठति च । यदि स संयतेन्द्रियस्तर्हि नमस्तस्मै पुरुषवरेण्याय । अन्यथा स कुलपांसन इति वक्तव्यम् । गुरोर्मर्त्यत्वादसम्पूर्णत्वाच्च जातु प्रमादो दोषो वा भवेत् । शिष्यैस्तु स नानुसरणीयः । अनवद्य एव गुरोराचारश्छात्रैरङ्गीकार्य इति गम्भीरं ललितं हृदयग्राहि चोपदेशविधानमत्र सशिरःकम्पं संस्तुमः । अहो भाग्यमन्यादृशमस्मत्पूर्वजानामार्यावर्तवर्तिनाम् । आध्यात्मिकक्षेत्रे परां काष्ठामधितिष्ठन्तस्ते पुराणा भारतीयाः कियदस्मानधमर्णानकार्षुरेतादृशसदुपदेशपटलदानेन । लेखनसाधनस्यासन्निधानेऽपि मुखपाठेनैवैनं शेवधिं संरक्ष्य येऽस्मभ्यमदुः । अनल्पानि तत्त्वानि सर्वकालेषु सर्वदेशेषु सर्वावस्थासु च निर्बाधं भासमानानि सर्वलोकादरभाजनं प्रभवन्ति भवितुम् ।

बाला अपि वैदिककाले ज्ञानलाभाय परमुत्कण्ठिता अवृतन्निति ज्ञायते। नेदं ज्ञानं विषयसुखोपभोगाय तैरभ्यलष्यत, अपि तु शाश्वतिकाखण्डानन्दानुभूतये। अस्यात्मनः क आदिः, कोऽन्तः किं रहस्यमिति बुधा अपि बहुधा संशेरते स्म। सर्वत्रापि चैतन्यशक्ति-र्ब्रह्ममयी एकैव। ईश्वरः एक एव निखिलाराध्यः सर्वदोदास्ते। 'एकं सद् विप्रा बहुधा वदन्ति'। ब्रह्मभिन्नं सर्वमपि नश्वरमत एवासत्। तत्तथ्यत्वभावना च भ्रान्तिमूला। पारमार्थिकज्ञानसूर्ये उदिते भ्रम-तमोनिकरो विद्रवति। एवमादिरहस्यजातं प्रकाशयन्त्युपनिषदः। आधुनिका विज्ञानिनोऽपीदमेव तत्त्वं द्रढयन्ति। जरायुजेषु, अण्ड-जेषु, स्वेदजेषु यदि वा उद्भिज्जेषु वर्तमाना चैतन्यशक्तिरेकैव ब्रह्मणो न भिन्ना। सूर्यादयोऽपि पदार्थाः तच्चैतन्यप्रदर्शकास्तस्य भासा विभान्ति तस्यैव विवर्ता वर्तन्ते च।

विप्रबालको नचिकेता दयायाः पितृभक्तेर्ज्ञानलिप्साया धृते-र्दाक्ष्यस्य च चकास्ति मूर्तिरिव। मरणोन्मुखानां गवां दर्शनेन तस्य कारुण्यं समपद्यत। पितृक्रतुवैफल्यशोकश्च तमपीडयत्। पितु-रध्वरे निरर्थके जाते पुत्रजनुषः किमु प्रयोजनम्। अतः पितृभक्ति-प्रेरितः स्वदेहत्यागेनापि यज्ञममोघं कर्तुकामः पितरं निबबन्ध "कस्मै मां दास्यसि" इति। तेन परेताधिपभवनं गतवतस्तस्य त्रिरात्रमुप-वासोऽपि प्राप्तः। अनिच्छतोऽपि वैवस्वताद्वरत्रयं लब्ध्वा तत्त्वोपदेशं स जग्राह। विनाशधर्मसु विभवेषु न तस्यासीदासक्तिः। सर्वथापि कार्यसाधननिर्धारः सुदृढस्तस्याभूत्। सर्वत्रापि बालकानां सत्कर्म-

ण्येवमास्थां ऽधिरतयत्नश्च भवेदिति चोपदेशमियं कथयति कथा ।

जीवात्मपरब्रह्मणोरैक्यमन्तरेण मनीषिणो विप्रतिपद्यन्ते। केचिदाचार्यास्तयोरभेदमभिप्रयन्ति । अन्ये तु भेदम् । आचार्यवर्यास्त्रयोऽपि दशोपनिषदां भाष्याणि व्यरीरचन्। भेदपक्षस्योपष्टम्भकाणि वाक्यानि कानिचित्तत्र तत्र समुपलभ्यन्ते चासूपनिषत्सु। तथापि प्राधान्येन ता जीवब्रह्मैक्यमेव प्रतिपादयन्तीति विदुषां बहुलानां मतम्। एतच्च सुस्पष्टं भवति मुण्डकोपनिषद्वाक्येन। यथा—"ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण। अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" इति। "तत्त्वमसि" इति च ।

वेदेषु क्वचिदीश्वरो मनुष्यवन्मूर्तिमानिति कथ्यते । येन मूढधियो भारतीयानामीश्वरज्ञानमतीव जघन्यमनुपादेयञ्चेत्युच्चावचं प्रलपन्ति। तदसत् । सूक्ष्ममतीनां तु याथार्थ्यं झटिति स्फुरत्येव। उपनिषदश्च तमेवार्थं स्पष्टं विवृण्वन्ति। यथा—"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः।" (मुण्ड) इति। पुरुषसूक्तञ्च न वाच्यार्थबोधकम्, अपि तु लक्ष्यार्थबोधकं युक्तियुक्तञ्चेति सुधियो जानन्ति।

इत्थं कामदुघेवोपनिषदैहिकानामुष्मिकांश्च विषयानञ्जसा बोधयित्वा जनेषु परस्परसौहार्दं वर्धयति। आत्मवत्सर्वभूतानि पश्यन् मनुष्यः कथं परान् द्वेष्टि। ब्रह्मणोऽत्यन्तसन्निहितत्वात्स एव नरस्य प्रेष्ठो भवति। तेन दैवभक्तिरपि तस्य वर्धते। सृष्टिक्रमश्चात्रोप-

वर्णित आधुनिकान् संशयात्मनोऽपि संतोषयतीत्यन्यन्माहात्म्यमुपनिषदाम्। भगवान् श्रीकृष्णः कुरुक्षेत्रेऽर्जुनाय सर्वोपनिषत्सारभूतं कर्मयोगमुपादिशत्खलु। यदि सर्वोऽपि भारतीयस्तां गीतां पठति तर्हि भगवतो बादरायणस्य कृतिः सफला भवेत्।

उपनिषदः पठित्वा बहवः पाश्चात्या धीमन्त आत्मानं कृतकृत्यमवेदिषुः। मुघलसार्वभौमोऽकबर आसामध्ययनञ्चाकृतेति वदन्ति। स पण्डितैस्ताः पारसीकभारत्यां व्यलेखयत्। तदनन्तरं तत्पौत्रोऽपि निरतिशयविज्ञानमार्याणां विलोक्य चित्रीयमाणचेताः प्राज्ञैः पञ्चाशतमुपनिषदामनुवाद्य "औप्नेखात्" इति नाम्ना प्रकाशमनैषीत्। अमुमेव पारसीकग्रन्थमालोक्य पाश्चात्याः शोपेनहारप्रभृतयो वेदान्तिन आर्याणां प्रतिभामाद्वितीयं ब्रह्मज्ञानं च प्रशशंसुरात्मानन्दञ्चाविन्दन्त। एवं विराजमानानामुपनिषदां माहात्म्यमवाङ्मनसगोचरमित्यलं बहुनोक्तेन।



## ॥ राजसिंहः ॥



अस्ति समस्तभुवनललामभूता समस्तरत्नसम्पदुन्मेषेण रत्नाकरमनुकुर्वाणा जीवलोकसुखैकस्थानमुज्जयिनी नाम नगरी। तत्र च निर्जिताखिलपरिपन्थिमण्डल आखण्डल इवापरः सर्वशास्त्रविचक्षणः क्षितिपतिरासीद्राजसिंहो नाम। तस्य कुलक्रमागतो नीतिशास्त्रविशारदस्तीक्ष्णधिषणः प्रज्ञाविलासापहसितवाचस्पतिर्विपुलाशयो नाम द्वितीयमिव हृदयं नृपतेरासीत्सचिवाग्रणीः। मन्त्रिसहायः स नृपतिरनायासेनैव कृत्स्नां महीं परिखायितचतुस्सागरामपालयत्। उपारूढनवयौवनोऽप्यनधिगतानुरूपसम्बन्धो नानुमेने परिग्रहम्। राजकार्येष्वेव सततमाहितमनाः कालमयापयत्।

प्रजानुरञ्जने बद्धादरः स पार्थिवः स्वसहचरमनङ्गदेवाभिधं सकलराजगुणैरुपशोभितं राजन्यं प्रजाक्षेमपरिज्ञानाय प्रजिघाय। स तु सम्पूर्णामुर्वीं परिभ्रम्य सामन्तमण्डलेषु चिरमुषित्वा राजाधिकारिणः कथं स्वनियोगमनुतिष्ठन्तीत्यादिकानि विषयजातानि निपुणं निरूप्य स्वविषयं प्रतिनिवृत्तो राजानमुपह्वरे जगाद :—

"देव, विजयस्व। भवद्बाहुपरिघसुरक्षितमिदं भुवननिकेतनं विदधाति प्रजाः सुखसमृद्धिभाजः। देवादेशं शिरसि निधायेतो निष्क्रान्तोऽहं प्रथमं दक्षिणापथमगाम्। तत्रत्याः सर्वेऽपि पार्थिवाः

तव शासनं महाननुग्रह इति मकुटतटेन माल्यमिव धारयन्ति। ततोऽहं बहून् क्रान्त्वा जनपदान् क्रमेणोपागमं पारावारोपकण्ठम्। तत्र प्रवहणमारुह्य प्रापं समृद्धां सिंहलाम्। तद्भूपेन वीरसेनेन समहोत्सवमभ्यर्चितः परमां मुदमध्यगच्छम्। त्वदाज्ञापरिपालनं व्रतमिव मन्यमानो न स प्रमाद्यति स्वधर्मादल्पमपि। मयि कञ्चित् कालं सुखमुषित्वा निर्गमनाभिमुखे स नरपतिरवोचत्—'त्रिभुवनाभ्यर्चितशासनस्य राजसिंहस्य प्रभावभासितनिखिललोकस्य भास्वत इवाभ्युदयेन सर्वे वयं नवचैतन्यभाजो भवामः। रत्नाकर इव सर्वरत्नानां भाजनं देव एव। इयं च मे दुहिता विनयवती सकलकलाप्रवीणा रतिरिवानङ्गस्य भूपालस्य तस्य भवितुमर्हति भार्या। मनसा च पूर्वमेव तस्मै समर्पिता' इति।

उक्त्वा च स हरिणाक्षीं सर्वाङ्गसुन्दरीं रूपेण रतिमिवाधरीकुर्वतीं धावल्येन क्षीरसागरोद्भूतां पद्मामप्यपहसन्तीमिवादर्शयन्मत्तकाशिनीमष्टादशवर्षदेशीयाम्। दृष्ट्वा तु तामनवद्यहृद्यपेलवाङ्गीं कुरङ्गीदृशमचिन्तयम्—'अहो, विधातू रूपनिर्माणचातुर्यम्। अथवा विनैव करस्पर्शेन निर्मितेयं मनसा तेन। अन्यथान्यत्राप्येतत् प्रदृश्येत कौशलम्। धन्यमिदमवनीतलम्, यदनेन ललनारत्नेनाधिष्ठितम्। पुण्यभाजो ह्यस्या बन्धवः। यत्तेऽनिशमस्याः सहवाससुखमनुभवन्तो वचनामृतमापिबन्तो दिवसमतिवाहयन्ति। महाभाग्यशाली खलु सः, योऽस्याः पाणिं ग्रहीष्यति। सर्वथा महाराज एवैनामर्हत्युद्वोढुम्' इति। ततो वीरसेनस्तद्विवाहाहितोद्योगो दूतं कञ्चिन्मया सह प्राहिणोत्। तेन सह नौकामारुह्य यावद्दशयोजनं गच्छामि,

तावत्प्रलयमारुतप्रतिभयो महावातः सागरजलं पर्वतशिखरोच्छ्रितं पातालगभीरं च कुर्वन्नावयोः प्राणसंशयमकार्षीत्। सहसा तरणिर्भग्ना, तया सहास्माकं जीवित्ताशा च। तथापि धैर्यमवलम्ब्य दोर्भ्यां प्लवमानौ कथं कथमपि दैवात् किञ्चित्तीरमयासिष्व।

तत्रामानुषकृती द्वे ललने हेमरत्नविचित्राङ्ग सारङ्गेण सार्धं सङ्क्रीडमाने सदूतं मां सकरग्रहं किञ्चिद्दिव्योद्यानमनैष्टाम्। तस्य मध्ये स्वच्छसलिलं मरालपङ्क्तिसुभगसैकतं सम्फुल्लकमलमुदिततारागणमिवाकाशमद्राक्षं किञ्चित्सरः। तत्तीरे काचिद्दिव्ययोषा ध्यानमग्ना महेश्वरमर्चयन्ती मया दृष्टा। अर्चयित्वा च सा सुन्दरी गन्तुमुद्यता 'भद्रे, का त्वम्' इति मया पृष्टा यौवनदर्पाविष्टा न किञ्चिदुक्त्वा प्रायात्। तदा 'श्रीराजसिंहसार्वभौमपादाब्जेन शपे। मा मामवधीर्य गमः' इति मद्वचनमाकर्ण्य दम्भोल्याहतेव निवृत्तगमनव्यापारा मुहूर्तमिव स्थित्वा विनीता मदन्तिकमागत्य हर्षविस्फारितेक्षणा कीर्तितं त्वां प्रणम्याभाणीत् :—'सत्यं त्रिजगद्विजयी सार्वभौमो राजसिंहो जयति। यस्य प्रसादादहं महाभयान्मोचितास्मि' इति। तच्छ्रुत्वा कौतूहलाकृष्टचेतास्तामपृच्छम्— 'भद्रे, कथं मत्स्वामिना त्वमरक्ष्यथाः? महदिदं मे कुतूहलम्। तत्कृपया मयि भक्त्या च स्वामिनि स्ववृत्तान्तं विस्तरशो ब्रूहि' इति। सा प्रत्यवादीत् :—

'श्रूयतां यदि कुतूहलम्। अस्ति सर्वजगद्विश्रुतो वैश्रवणभ्राता मणिभद्रो नाम। यस्य प्रियतमा मदनमञ्जरीति नाम्नाहं प्रथिता। कदाचिद्विलासार्थं महीं गत्वा तेन सह तत्र तत्रारमे सुचिरम्। ततो

मनोहरोद्यानशालिन्यामुज्जयिन्यां कस्मिंश्चिदुद्याने मदविह्वला प्रियतमाऽऽलिङ्गितावापं गाढं निद्रामुद्राम्। तस्मादनतिदूरवर्तिनि श्मशाने कृतावासो भस्मकण्ठो नाम कापालिको मां तदवस्थामालोक्य वृद्धोऽपि प्रवृद्धमान्मथविकारः आतुरोऽपथ्यश्रेणिमिवाभ्यलषत्। अथ भर्त्रा सह प्रयातायां स्वपुरीं मयि स कापालिको मम वशीकरणाय मन्त्रसाधनमकार्षीत्। महाप्रभावैस्तन्मन्त्रैर्भुजङ्गीवाकृष्यमाणा भर्तारमहं शरणमयासिषम्। तेन प्रार्थिते गुह्यकपतौ वीर्यशालिनां साक्षात्कृतमन्त्राणामसाध्यं न विद्यते किमपीत्युक्तवति, स ब्रह्माणं शरणं प्रपन्नः। करुणार्द्रचेता विधातैवमचकथत्—'महानयं मन्त्रसिद्धो दुर्जयः प्रतिभाति। तथापि श्रीराजसिंहस्तन्नाशनाय प्रभवेत्। तद् भयकाले तव जाया तमवनीपालमाक्रन्दतु' इति। यावन्मणिभद्रो गृहान् प्रतिनिवर्तते तावत्कापालिकेनाहं निशि मन्त्रशक्त्या श्मशानं भीषणमकृष्ये।

तत्र प्रेतचक्रमहाकुण्डे प्रज्वालिताखिलदिग्विभागाः सर्षपाहुतीः क्षिपन्तं प्रभूतमण्डलमध्यनिषण्णमपरावतारमिव प्रेताधिपस्य, प्रतिनिधिमिव युगान्तकालस्य, कायमिव कल्मषस्य, किमपि किमप्युच्चैर्जपन्तमद्राक्षं घोरं कापालिकम्। भयविह्वला च कम्पमानमूर्तिरसहाया तत्प्रभावापहृतचेतना जालबद्धेव शफरी सुतरां व्यपथे। यावदसौ क्रूराध्यवसायो निर्वर्तिताज्याहुतिर्न मां प्रसह्य कर्षति, तावन्मानप्राणरक्षणं चिकीर्षन्ती 'किं करवाणि मन्दभाग्या। कं नु शरणं यामि। को मामिहैकाकिनीं कापालिकहस्तगतामभ्युपपत्स्यते हरिणीमिव

पञ्चास्यमुखकुहरनिपतिताम्' इत्यादीनि विचिन्त्य सहसा कमलासनादेशं संस्मृत्य धैर्यमवलम्ब्योच्चैराक्रोशम्—'परित्रायस्व प्रभो परित्रायस्व राजसिंह बालामशरणामिमाम्। हन्त कापालिकेनापहृता नृशंसेन मन्दभागिनी विपद्ये' इति। आक्रन्दनाद्यावन्न विरमामि, तावद्राजीवलोचनो विलोलभास्वरकुण्डलो मूर्तिमानिवोत्साहः, आयतनं विक्रमस्य, धाम धैर्यस्य, गुरुर्गौरवस्य, हिमवानिव स्थिरघनतनुः श्मशानतिमिरं निर्वापयन् देहभासा शितिकण्ठ इव महासेनानुगतः खड्गपाणिर्महासत्त्वः कश्चिद्दर्शनगोचरतामयासीत्। स च दन्तांशुभिस्तमो दलयन् ससाध्वसां मामेवमाश्वासयत्—'भद्रे, मा भैषीः। जगद्रक्षके मयि राजसिंहे कोऽयमनात्मज्ञो मुग्धायां त्वय्यविनयमाचरितुमीष्टे' इति। तदनु स महाराजः स्वसेनापतिं दुष्टस्य कापालिकस्य शातनायाचोदयत्। तत्क्षण एव सर्वैः सैनिकैरुद्यतासिलतैः साधिक्षेपमुच्चैर्गर्जद्भिः परिवृतो मण्डलस्थित एव विधुरिव विधुन्तुददन्तैरभिहतः स जरत्कापालिकोऽपगतासुर्भूमौ न्यपतत्। इत्थं तेन भूपालमौलिलीढाङ्घ्रिणा रक्षिता वल्लभनासाद्य परां निर्वृतिमध्यगमम्। साहं तस्य राज्ञः कीर्तिपताकेव त्रैलोक्यचारिणी यक्षपुरेऽत्रावतिष्ठे। सिंहलेश्वरेण प्रदत्तां त्रैलोक्यसुन्दरीं ललनां राजसिंहमभिक्रुध्यन्तो म्लेच्छाः शका हर्तुं व्यवस्यन्ति। तद्यदत्र प्रतिविधेयं क्रियतामाशु विशांपतिना। नूनं महाप्रभावस्य तस्य न किञ्चिद्दुष्करमिह। विनयवतीञ्चोपयन्तुमसावेव क्षमः क्षितिपः। इमे पुनर्दिव्यकन्ये प्रजापतिना पुरा घण्टनिघण्टाख्यौ दानवेन्द्रौ हन्तुकामेन कान्तिसर्वस्वसंग्रहेणासृज्येताम्। ताविमे दृष्ट्वा

निरुपमलावण्ये कलहायमानौ प्रहृत्य परस्परं व्यापादयामासतुः । ततः 'उचिताय वराय दातव्ये' इत्यादिश्य विरिञ्चिः कुबेरहस्ते ते न्यासीकृतवान् । अलकाधिपश्च मत्पतिगृहे ते न्यास्थत् । अतोऽहमेवेमे पालयाम्यप्रमत्ता । अयञ्च रत्नसारङ्गो जयन्तविनोदाय महेन्द्रादिष्टेन निर्मितो विश्वकर्मणा । ततो रावणनीतमेनं तद्वधोत्तरं विभीषणश्शत्रुविभीषणो मह्यमुत्सवकाले प्रादात् । अत एतत्कल्याणाभिनिवेशिनी भगवन्तमुमाकान्तमुपातिष्ठे । अनयोर्गुणवशीकृतविश्वयो रामयोः पृथिवीजानिरेव राजसिंहः समुचितः पतिः । हेमहरिणश्चायं तस्यैव विनोदस्थानं भविष्यति' इत्येवमभिधाय सा तान् मह्यं समर्प्यादृश्यतामगात् ।

ततः प्रस्थितोऽहं तैः सार्धं विदर्भानुपागमम् । तत्र च त्वदर्थमायान्तीं सिंहलेन्द्रदुहितरं कतिपयाप्तपरिवारैः परिवृतामपश्यम् । ज्ञात्वा चेमं व्यतिकरं संरब्धाः म्लेच्छाः सेनाच्छादितदिगन्तराला अस्मानरुन्धन् । अथ महति सम्पराये कम्पितमहीतले निलिम्पाश्चर्यकृति सम्प्रवृत्ते तैः सह विदर्भराजस्य विक्रमशक्तेः, सैव मणिभद्रजाया गुह्यकसेनया सहालक्षितसन्निधाना वैदर्भध्वजिनीं प्रविश्य नृशंसान् परिपन्थिनः क्षणेनैव समूलघातमवधीत् । तेन परितुष्टा सिंहलेन्द्रतनया दिव्याङ्गनाद्वयेन सह त्वद्विवाहाय सर्वराजन्यैः परिवृता शीघ्रमितो मया निर्दिश्यमानमार्गा सोत्साहमागच्छत् । अधुना च नगराद्बहिरुद्याने त्वदागमनं प्रतिपालयन्ती तिष्ठति । श्रुत्वा च देवः प्रमाणम्" इति ।

ततो राजा परमानन्दनिर्भरः कुतूहलाकृष्टचेता गजवाजिसमेतः सामन्तपरिवृतो महोत्सवं कारयन्मङ्गलतूर्यघोषैर्बधिरीकृतदिङ्मण्डल उद्यानाभिमुखं ययौ। तत्र सुमुखीं विनयवतीं वीक्ष्य विस्मयाविष्टोऽचिन्तयत् "अहो मौर्ख्यमनङ्गस्य। यद्रतिसौभाग्येन स गर्वितो भवति। अस्यां त्रिजगदाभरणभूतायां चक्षुषोरमृतमाप्लावयन्त्यां को नु गणयति रते रामणीयकम्। ललाटन्तपे तपति तपने किमु तारका गोचरीभवत्यक्ष्णोः" इति। अथ स तामिन्दुवदनां दिव्याङ्गने च विधिवत्परिणीय हरिणश्च प्रतिगृह्य स्वराजधान्यां महोत्सवं कारयामास। इत्थं दयितात्रयमनुरूपं लब्ध्वा च मनीषिणि मन्त्रिणि निहितराज्यभारो यौवनभोग्यानि विषयसुखान्यनुभवन् सुचिरं प्रजाः प्रजा इव परिपालयन्नमन्दमानन्दमधिजगाम॥





# BOOKS BY THE SAME AUTHOR

श्रीरामकृष्णसहस्रनामस्तोत्रम् ।

गुरुसपर्या ।

स्वातन्त्र्यज्योतिः ।

श्रीशिवानन्दविलासः । (महाकाव्यम्)

ಆಶ್ಚರ್ಯಚೂಡಾಮಣಿ

ತಪ್ಪಿನ ತವರ್ಮನೆ

*For Copies apply to*

**THE AUTHOR**

55 Wilson Gardens,
Bangalore-2